Anned
1

* श्रीः *

श्रीमदानन्दवनप्रसूनमालायाः (२)

द्वितीयं पुष्पम ।

सर्वतन्त्रस्वतन्त्र—

महामहिम–आचार्य—

श्रीमदमृतवाग्भवप्रणीता

# * श्रीमदमृतसूक्तिपञ्चाशिका *

संस्कृतव्याख्यासहिता ।

विद्वद्वरकलास्थानं श्रीपीठं पण्डितप्रियम् ।
अमृतं वाग्भवं भूयात्पुरुषार्थप्रसिद्धये ॥





प्रकाशकः—

श्रीपीठम्

विक्रम सं. २०३०

प्रथमं संस्करणम्

मूल्यम् १/- रु.

पुस्तकप्राप्तिस्थानम् —

राजपण्डित श्रीगोविन्दमिश्र
( अध्यक्ष-श्रीस्वाध्यायसदन, सोलन )
चौबुर्जा, भरतपुर ( राजस्थान )







श्रीग्रन्थमालाका एक नवीन पुष्प अद्‌भुत सुगन्धयुक्त प्रकाशित हुआ है। पृष्ठ संख्या ३४०, मूल्य ५ रु. २५ न. पै.।

## श्रीललितासहस्रं काव्यम्

इसमें राजराजेश्वरी श्रीमहात्रिपुरसुन्दरी श्रीललिताम्बाके दिव्य सहस्रनामस्तोत्रके प्रत्येक नाम पर एकेक श्लोक है। इसकी महिमा अद्‌भुत है। पाठकभक्त स्वयं साक्षी हों।

मुद्रकः—
गो. दा. बेळगी,
पेपको प्रेस,
३७६ शुक्रवार पेठ, पुणें २.

* श्रीः *

श्रीमदानन्दवनप्रसूनमालायाः द्वितीयं पुष्पम्

सर्वतन्त्रस्वतन्त्र–

महामहिम–आचार्य–

श्रीमदमृतवाग्भवप्रणीता

# ★ श्रीमदमृतसूक्तिपञ्चाशिका ★

पं. श्रीबलजिन्नाथ पण्डित एम्. ए. पीएच् डी.
प्रणीतया पदार्थदीपिन्या संस्कृतव्याख्यया सहिता।



संशोधकः सम्पादकश्च
श्री. अरुण पारखे एम्. ए. ( संस्कृत )



प्रकाशक :—

श्रीपीठम्

| | | |
|---|---|---|
| प्रथमं संस्करणम् | वि. स. २०३०<br>वैशाख शुक्ल १० | मूल्यं<br>१०रु. |

* श्रीः *



सुकवीन्विबुधान्गुरून्प्रसिद्धा—
नियमानन्दवनप्रसूनमाला ।
भवताद्भवभावमानयन्ती
नवगौरीव गिरीशकण्ठलग्ना ॥

विद्येहं वेद्मि विन्दामि नदन्स्वं कलया स्वया ।
महाशाकोऽभिनन्दामि चात्मनः पूर्णविन्दुताम् ॥



एतत्पुस्तिकामुद्रणसंशोधनसंपादनादिसर्वस्मिन्नपि कार्ये श्री. म. स. पारखे ( प्रमुख उद्योगपति, पूना ) महोदयः तथा तत्परिवारः शतशो धन्यवादमर्हति ।

इति निवेदयति—
पञ्चाशिकाप्रणेता
श्रीमान् अमृतवाग्भव आचार्यः

॥ श्रीः ॥

आचार्य – श्रीमदमृतवाग्भवप्रणीता –

# ☆ श्रीमदमृतसूक्तिपञ्चाशिका ☆

श्रीबलजिन्नाथपण्डितप्रणीतया पदार्थदीपिन्या टीकया समलङ्कृता ।

ददाना स्वाऽऽलोकं सदसदविवेकाकुलनरे
दिशन्ती सन्मार्गं तमसि गहनेऽज्ञानकलिते ॥
वितन्वानाह्लादं सहृदयजनानां हृदि परं
शरज्ज्योत्स्नैवैषा ध्रुवममृतवाणी विजयते ॥

इमास्तावत् सूक्तयो भिन्नेषु कालेषु विविधासु परिस्थितिषु विविधैरभिप्रायैर्लोककल्याणायाचार्यमहोदयानां स्वच्छे मानसे लहर्य इव प्रस्फुरिताः । काले काले च श्रीस्वाध्यायपत्रिकायां प्राकाश्यमप्युपयाताः । अथेदानीं सूक्तिष्वेतासु केवलं पञ्चाशत्संख्या एव लोकहितार्थमेव संगृहीता आचार्यमहोदयैः पञ्चाशिकाख्ययाचाख्याताः । एतासां पृथक्पुस्तकरूपेण प्रकाशनायापि प्रबन्धो विधीयते । परमिदानीन्तना भारताभिजना अपि जना देवभाषां बहुलं नावबुध्यन्ते । विशेषतश्चार्थगौरवमण्डितानां सूक्तीनां तत्त्वावबोधे केचन एव पारयन्तीति सर्वमप्य-

भिसन्धायाचार्यमहोदयैरेतासां सूक्तीनां सरलया देवगिरा टीकालेखने नियोजितोऽहं यथामति टीकां निर्मिणोमि। पाठकानामुपकृतिः, सहृदयानामाह्लादः, आचार्यपादानां प्रसादः आत्मनश्च तुष्टिरिति पदार्थचतुष्टयस्य लाभोऽनया टीकया सम्भवेदित्याशासमानेनाथ टीकाऽऽरभ्यते। पूर्वं तावन्महेश्वरनुतिरूपं मङ्गलं प्रस्तूयते –

**जटाजूटं मौलौ शिशुकशशिनो बिम्बमलिके**
**दधानो वामाङ्के गणपजननीं सस्मितमुखः।**
**वसानो नागेन्द्रत्वचमपि विभूत्याश्चितवपु-**
**र्मनोवाञ्छापूर्त्तिं रचयतु समेषां शिवयुवा ॥१॥**

मौलौ=मुकुटे। जटाजूटं=जटाकलापम्। अलिके=भाले, ललाटे। शिशुरेव शिशुकः, स्वार्थे कः। सचासौ शशीचेति, बालशशी, तस्य बिम्बं=मण्डलम्, अभिनवां शशिकलामिति भावः। दधानो=धारयन्। वामाङ्के=वामभागे। अङ्के वामपार्श्वतो, गणपस्य = गणेशस्य जननीं भगवतीं गिरिजां च दधानः। स्मितेन सहितमिति=सस्मितं मुखं यस्य सः=प्रसन्न मुखपङ्कजः। नागेद्रस्य=गजासुरस्य। त्वचं शोणितबिन्दुवर्षिणीं कृत्तिमपि वसानः = परिदधानः। विभूत्या = श्मशानरजसा चिताभस्मना, अश्चिता=चर्चिताऽलङ्कृतातनुर्यस्य सः। किञ्च विभूत्या=विश्वसृष्टिसंहाराद्यात्मिकयैश्वर्यरूपयापि समलङ्कृतस्वरूपः। शिवः युवेव शिवयुवा समेषां=सर्वेषां जनानां मनसः वाञ्छायाः मनःकामनायाः। पूर्त्तिं=पूर्णतां रचयतु=सर्वानपि जनान् पूर्णमनोरथान् सम्पादयतु। युवत्वेन परमेश्वरस्याऽतीव चित्ताकर्षकत्वं गृहस्थबहुलानां जनानां च कृते कृपालुत्वं ध्वनितम्। यतो हि स्वयं युवा सन् कामरसिको गणेशजननीं वामाङ्के धारयन्नस्ति, ततोऽस्माकमपि सद्य एवार्थकामपूर्त्तिं विधास्यतीति। किञ्च विभूत्याश्चितत्वेन, भक्तेभ्योऽपि भुक्तिमुक्तिविभूतिदानेऽलम्। नागेन्द्रचर्मधारणेन साधुजनातङ्ककारिणामसज्जनानां गजासुरप्रायाणां विनाशकोऽसाविति व्यज्यते। सस्मितमुखत्वेन शिवस्य भक्तानुग्रहप्रवणत्वं प्रसादसुमुखत्वं च व्यज्यते। देवीसहितत्वेन तस्य सकलशक्तिमत्त्वं सकलसम्पादनसामर्थ्यम्, चन्द्रमौलित्वेन भक्तेभ्यः परामृतप्रदत्वं, जटाजूटमण्डितत्वेन परमविरक्तत्वं भक्तानामपि पर्यन्ते विरक्तिप्रदत्वेन तेषां मोक्षाख्यतुरीयपदार्थोन्मुखतासंपादकत्वं ध्वन्यते शिवनाथस्य ॥ १ ॥

अथेदं भक्तजनप्रार्थनावशोल्लासितकरुणानुभाववर्णनदिशा भगवच्छ्रीकृष्णजयकारात्मकं मङ्गलं वितन्यते —

**स्वभक्तानां भर्तुः सपदि भयहर्तुः प्रणमतां**
**मुहुर्लीलोल्लोलज्जलधिमनसो व्रीडितदृशः ।**
**सुविप्राद्वैदर्भीपरिणयनपत्रीं विमृशतो**
**हरेरीषच्छोणं चलनयनकोणं विजयताम् ॥ २ ॥**

स्वभक्तानां भर्तुः=भरणपोषणादिकर्तुः । प्रणमतां = नतिं कुर्वतां निजभक्तानां भयहर्तुः=भयापहारकस्य । मुहुर्वारम्वारं, सततगतिशीलतया वर्तमाना या लीला= निमेषोन्मेषपरम्परामयी परस्पन्दात्मिका स्वातंत्र्याख्या पारमेश्वरी क्रीडा तयोल्लोलत्= तरङ्गितं नित्यं बहुतरतरङ्गाकुलो जलधिरिव मनो यस्य तस्य, यथाहि जलधिर्नित्यमेव तरङ्गमालाकुलस्तथैव भगवतो हृदयमपि स्पन्दात्मकमूलशक्तिस्फारात्मकैः शक्तिव्रातैस्तरङ्गितं विलसति । सुविप्राद्=रुक्मिणीप्रेषितात् सुजनब्राह्मणात् । वैदर्भी=विदर्भनरेशसुता रुक्मिणी । तस्याः सम्बन्धिनी तयैव विप्रहस्ते प्रेषिता या परिणयनपत्री= विवाहप्रस्तावाभिप्रायगर्भं पत्रम्। तदेव विमृशतो=विचारयतः । व्रीडिता=लज्जिता दृक्=चक्षुर्यस्य तस्य, लज्जारूपशृङ्गारानुभावव्यञ्जकनेत्रस्य । हरेर्भगवतः श्रीकृष्णस्य । ईषच्छोणम्, किञ्चिदरुणम्, करुणाजनितरोषेणारुणम् । चलं=रुक्मिणीविषयकचिन्तया किञ्चिचाञ्चल्ययुक्तम्, नयनयोः कोणम्=नयनप्रान्तभागो विजयताम्=सर्वोत्कर्षेण वर्तताम् । भक्तजनसंकटत्राणविषयकचिन्तारुणं हि भगवतो नयनकोणमस्मादृशजनेभ्यो हिततममतस्तदेव सर्वोत्कर्षेण वर्तताम् । भगवतः आर्तत्राणदुष्टदमनात्मकोऽनुग्रहनिग्रहस्वरूपः स्वभावः सदैवोद्रिक्ततामियात्, येन वयमपि सद्य एव संसारभयाद्विमुक्ता भवेम । जयत्यर्थेन नमस्कारस्याप्याक्षेपात् तदीदृशं हरेर्नयनकोणं प्रत्यस्माकं प्रणतिः = कायवाङ्मनसां प्रह्वीभावोऽप्यस्तु ॥२॥

अथेतः चतुर्भिः पद्यैः गुरुशक्तेर्जयकारो जेगीयते । तत्र प्रथमं तावत् करुणारसार्द्रा गुरुदृक् स्तूयते —

**पुमांसो वा योषा अदितितनया वा दितिसुताः**
**समिद्धाः सिद्धा वा प्रकृतिपतिता मूढमतयः ।**
**समीहन्ते काञ्चित् करुणमसृणाऽपाङ्गशरणां**
**स्वसंवित्त्यै दिव्यां गुरुदृगमला सा विजयताम् ॥३॥**

पुमांसः=पुरुषा वा योषाः = स्त्रियो वा । अदितेः तनयाः=देवाः वा । दितेः सुताः=दैत्या वा । समिद्धाः=तेजस्विनः सिद्धाः = सिद्धजना वा प्रकृत्या=स्वभावेन पतिताः=नीचस्वभावा जना मूढमतयो=मूर्खजना वा, सर्वप्रकारा मानवाः । स्वस्य= आत्मनः, सम्यग्=याथार्थ्येन, वित्त्यै=ज्ञानाय, स्वकीयपारमार्थिकस्वरूपप्रत्यभिज्ञायै । यामित्यध्याहार्यम्, यां काञ्चित्, स्फुटं वर्णयितुमशक्यां स्वानुभवगम्याम्, करुणः= करुणारसार्द्रोऽत एव मसृणः = सुकोमलो योऽपाङ्गो = नयनप्रान्तभागः स एव शरणं यस्यास्ताम्, करुणार्द्रतया तिर्यगिव पश्यन्तीं दिव्यां, गुरुदृशं=परमपदप्रापकस्य सद्गुरोर्दृष्टिं समीहन्ते, तस्यै स्पृहयन्ति । साऽमला=आणवादिमलरहिता गुरोर्दृष्टिः विजयतां=सर्वोत्कर्षेण वर्तताम् । लौकिकेषु पशुजनेषु तादृशो दृष्टेरदृश्यमानत्वादसौ दिव्येति स्तुता । परमपदप्रापकश्च सद्गुरुः सर्वमपि भावाभावात्मकं जगद् याथार्थ्येन पश्यति । अत एवेदृशस्य गुरोर्दृष्टिराणवादिमलरहितत्वेनामलेति स्तुता । ईदृश्या सद्गुरोः कृपादृष्ट्या विना न कस्यापि स्वरूपप्रत्यभिज्ञा संभवतीत्यतस्तत्सिध्द्यै सर्वेऽपि जना गुरोरनुग्रहात्मिकां दृष्टिमेव वाञ्छन्ति । अतोऽसावेव सर्वोत्कर्षेण वर्तताम् । वयं तामेव सर्वोत्कृष्टां मन्येमहि ॥ ३ ॥

अथ गुरुकलायाः माहात्म्यप्रदर्शनपुरःसरं तस्याः शिवत्वप्रतिपादनदिशाऽसौ स्तूयते –

**असिद्धाः संसिद्धा मलिनमतयो निर्मलधियो**
**विपन्नाः सम्पन्ना नरकगतयो नाकगतयः ।**
**यदालम्बात् सद्यः सकलपरमार्थैकधनिनो**
**जनाः सम्पद्यन्ते शिवगुरुकला सा विजयताम् ॥४॥**

न सिद्धा=असिद्धाः, सिद्धिरहिताः सामान्याः पशुजनाः, सम्यक् सिद्धाः=संसिद्धाः, अवाप्तसिद्धयो भक्तजनाः । मलिनमतयो=मूढबुद्धयः । निर्मलधियः=निर्मलमतयः । विपन्नाः=विपदभिभूताः । संपन्नाः=संपदा स्वपात्रतां नीताः । नरके गतिर्गमनं येषां ते नरकवासिनः । नाकगतयः=स्वर्गोपभोगपराः, सर्वप्रकारा अपि जनाः । यस्या आलम्बात्=यस्या आश्रयत्वेन गृहीततत्त्वात् । सद्यस्तत्क्षणमेवाविलम्बं=सकलोऽविकलो यः परमार्थस्तस्यैकेऽद्वितीयाः । धनिनः अविभक्तसकलपरमार्थधनस्वामिनः सम्पद्यन्ते

=सञ्जायन्ते, सा शिवरूपिणी गुरुकला विजयतां=सर्वोत्कर्षेण वर्तताम् । तीव्रानुग्रहपरा सती साऽस्मत्कृते सर्वातिशाय्युत्कर्षमण्डिता सञ्जायतामिति तात्पर्यम् । परमार्थधन-दायिनी या गुरुकला साऽवश्यं शिवरूपिणी । प्रत्यभिज्ञातस्वात्ममहेश्वरभाव एव सिद्धजनः सद्गुरुत्वं भजेत । ततस्सद्गुरुर्मूर्त्तिमान् शिव एव । गुरोः कला=अनुग्रह-लीलामयी क्रीडा एव गुरुकला, अथवा गुरुरूपिणी शिवस्य कला एव शिवगुरुकला शिवस्य गुरुरूपिणी कलेति विग्रहः । कलाचैतत्पक्षे अंशः । गुरुः शिवांश एवेति तात्पर्यम् । सशरीरत्वमेवात्र परिपूर्णतायाः बाधकम् । अत एव अंशतयैव निर्देशः न पूर्णशिवतया अशरीरमुक्तावेव सुपरिपूर्णः शिवभावः । सदेहमुक्तौ चांशलेशेन न्यूनतेति भावः ॥४॥

गुरुरेव स्वरूपप्रत्यभिज्ञाप्रदः । सद्गुरुश्च शिव एवेति प्रतिपादितम् । अथेदानीं स्वात्मन एव शिवत्वेन परमार्थतया गुरुत्वं प्रतिपाद्यते –

**ऋतं वा सत्यं वा स्फुरति सकलं कल्पितमिदं**
**महाधारे यस्मिन् स खलु परिपूर्णः स्वमहिमा ।**
**विधत्ते जानीते स्वरसललनो वाञ्छति महान्**
**निराशंसः स्वात्मा सकलगुरुराजो विजयते ॥ ५ ॥**

यस्मिन् महति=परिच्छेदातीते आधारे=आश्रये । सर्वस्य विकल्पजातस्य भित्तिभूते। कल्पितमिदं ऋतं वा सत्यं वा स्फुरति=अवभासते । स खलु परितः पूर्णः सर्वतोऽपरिच्छिन्नो=देशकालादिभिरपरिमितः स्वस्यात्मन एव शुद्धसंविद्रूपस्य महिमा =माहात्म्यम्, तस्यानवच्छिन्ना परा शक्तिरेवेति । सत्यमसत्यं चोभयं कल्पितमेव । यत उभयं सापेक्षम् । सत्यापेक्षयेदमसत्यमसत्यापेक्षया चेदं सत्यमिति कल्पनामात्रा-श्रयोऽयं विकल्पात्मको व्यवहारः । यस्मिन्नाधारभूते सति विकल्पस्यास्योदयोऽसौ परिपूर्णः कल्पयितुः, प्रमातुः शुद्धाहंविमर्शात्मकस्यैव महिमा, तस्य शक्तिरूपः इति । स एव स्वात्मनो महिमा स्वभावत एव विधत्ते कुरुते जानीते च । ज्ञान-क्रियापरो भवति । स्वात्मा हि शुद्धप्रकाशविमर्शात्मकसंविद्रूपः । प्रकाशत्वमेव तस्य ज्ञानं येन स्वयमेव निरपेक्षतया स्वेनैव प्रकाशेनाभाति स्वमेव प्रति । विमर्शत्वं च तस्य क्रिया । तेनैवासौ स्वात्मानमहमिति विमृशति । स्वसत्तां संवेत्ति । एतत् स्व-

संवेदनमेव तस्य क्रिया । नासौ स्वस्माद्भिन्नं विषयं जानाति करोति वाऽत्र परिपूर्णताशालिनि पदे । अपि तु स्वयंप्रकाशमानो जानीते, स्वात्मानं विमृशँश्च करोति स्वविमर्शनमेव नान्यत् । भेदाभेदात्मके वा परापरे पदे स्वाङ्गरूपमेव विश्वमन्तर्मुखतया जानीते बहिर्मुखतया च कुरुते । किञ्च स्वरसेनैव=स्वानन्दानिर्भरत्वेनैव ललनं विलसनं यस्य सः स्वरसललनः सन् वाञ्छति=इच्छति । न तु बाह्यं किमपीच्छति । अपि तु स्वात्मरूपेण विलासेन विलसितुमिच्छति । ब्रह्माण्डबुद्बुदकदम्बकसृष्टि-संहाररूपं स्वं विलासमेवोल्लासयितुमिच्छति,नान्यत् किमपि स्वतो बाह्यं विषयजातम्। यतो महानसावपरिमितत्वात् । यो हि परिच्छिन्नः स्यात् सोऽपूर्णम्मन्यः सन् किमपि भिन्नं वाञ्छेत् । परमेष्ठ स्वात्माऽपरिमितत्वान्निराशंसः=निर्गता आशंसा = बाह्यविषयोन्मुखेच्छा यस्मात् सः । निराशंसत्वेनासौ किमिव बाह्यं वाञ्छेत् । असावीदृशः शिवरूपो य आत्मा स एव सकलानां गुरूणामपि गुरुत्वात् सकलगुरुराजः अत एवासावेव विजयते=सर्वोत्कर्षेण वर्तते । ज्ञानं हि सदा क्रियारूपं येन जानीत इति तिङः प्रयोगः । क्रिया च ज्ञानाविनाभूता । यतो हि यदेव कोऽपि जानीते तदेव कुरुते, यत्तु न जानीते तत् कथं कुर्वीत ? ज्ञानं वा क्रिया वोन्मुखतारूपां प्रवृत्तिं विना नैव सम्भवति । सा चोन्मुखता निरिच्छोर्न सम्भवेत् । ततो ज्ञानक्रिये इच्छानुस्यूते । या चेच्छा सापि न ज्ञानं विना सम्भवेत् । यदेव कोपि जानीयात्तदेवेच्छेत् । यच्चैतदेषणं तदपि क्रियारूपमेवेतीच्छाक्रियाज्ञानानि परस्पर-मनुस्यूतानि । तथापि प्रसरक्रमेण स्वात्मनः स्पन्दरूपिणीच्छा प्रथमं ज्ञानरूपतया ततश्च क्रियारूपतयोल्लसति। स्वात्मा हि शुद्धप्रकाशविमर्शसमरसाकारः। प्रकाशत्वेनासौ ज्ञानं विमर्शत्वेन च क्रियामुल्लासयति स्वस्य स्पन्दरूपत्वमाहात्म्येन । संहारक्रमेण चेच्छा ज्ञानमनुप्रविशेत् क्रिया च स्वात्मरूपं ज्ञानम् । अत एव क्रियाज्ञानेच्छा-नामुत्तरोत्तरमिह निर्देशः । वस्तुतः स्पन्दात्मिकाया इच्छाया एव आन्तर्मुखबहिर्मुखे द्वे गती इवेमे ज्ञानक्रिये निमेषोन्मेषे प्रसरसंहारे वेति । ज्ञानक्रिये तु किञ्चिन्मात्रोच्छूनौ प्रकाशविमर्शावेव, यतस्तावेव ज्ञानक्रिययोः सूक्ष्मतरावात्मानौ । अस्तु तावदे-तावदेवेदमतिगहनं प्रबुद्धजनगम्यं दर्शनरहस्यम् ॥ ५ ॥

अथानेन पद्येन सद्गुर्वनुग्रहपात्रभूतस्वसच्छिष्यस्योत्कर्षो गीयते –

अपुण्यान् पुण्यान्वा परिहृतभिदा या करुणया
जनांस्त्रातुं दातुं सततममितां मुक्तपदवीम् ।
प्रसन्ना सन्नद्धा स्वबलवति यस्मिन् गुरुकला
निराशंसा कापि स्फुरति हृदयं तद्विजयताम् ॥ ६ ॥

स्वबलवति=आत्मबलेन शालिनि यस्मिन् सच्छिष्यहृदये, अपुण्यान्=अपवित्रान् पापिनः । पुण्यान्=पुण्यात्मनः वोभयरूपानपि जनान् । परिहृता=त्यक्ता, भिदा=भेदभावदृष्टिर्यया सा, सर्वत्र समदृष्ट्या पश्यन्ती सती, या प्रसन्ना=प्रसादसुमुखी सती गुरुकला करुणया हेतुभूतयोपरिवर्णितान् जनान् सांसारिकेभ्यः कष्टेभ्यस्त्रातुम्, अमितामपरिमितां च मुक्तपदवीम् =मुक्तिदशां तेभ्यः दातुं च सततमपि सन्नद्धा भवति, आप्तकामत्वेन परिपूर्णत्वेन चाशंसारहिता सती, विषयोन्मुखेच्छाशून्या सती, सा कापि=वर्णयितुमशक्या स्वानुभवमात्रगम्यपरमार्था । गुरुरूपिणी शिवकला सशरीरा शिवदशा यस्मिन् पूर्ववर्णिते हृदये स्फुरति झगिति स्पन्दरूपतया देदीप्यते तत् सच्छिष्यहृदयं विजयतां=सर्वोत्कर्षेण वर्तताम् । अनुग्रहोन्मुखी गुरुकला हि यं कमपि, समलममलं वा हृदयं सद्य एव पवित्रीकर्तुं भुक्तिमुक्तिपात्रतां च नेतुं क्षमा । ततस्सा यस्मिन् हृदये स्फुरति तद्धृदयं सद्य एव शिवभावसमावेशशालि भवितुमलमिति तदेव विजेतुं शक्नुयात् ।। ६ ।।

अथ सकलव्यवहारभित्तिभूता संविद्देवी स्तूयते –

**अशेषाः सामान्या मुहुरनुविशेषा अपि तथा**
**स्फुरन्तो लक्ष्यन्ते य इह विषया वा विषयिणः ।**
**सदा सापेक्षास्ते परमगतिमन्तो वरकलां**
**भजन्ते यां पुण्या प्रतिपदतुला सा विजयताम् ।। ७ ।।**

इह=संसारे ये सामान्या गोत्वाश्वत्वादिरूपाः, अनु=पश्चाद् विशेषा डित्थ डवित्थ चैत्रमैत्रादिरूपा, घटत्वादिसामान्या घटादयो विशेषा वा, विषया=अन्तःकरणबहिःकरणग्राह्याः । विषयिणो=देहबुद्धिप्राणशून्यरूपा ग्राहका वा । स्फुरन्तः प्रकाशमाना विमृश्यमानाश्च लक्ष्यन्ते = ज्ञानविषयीक्रियन्ते ते सर्वेऽपि सदैव सापेक्षाः । न खलु स्फुरणं तेषां नैजो धर्मः, अपि तु संवित्प्रकाशावलम्बनेनैव स्फुरन्तो लक्ष्यन्ते । ततस्तेषां सदैव संविदः अपेक्षा स्वात्मसिद्धौ भवत्येव, किञ्च संविदनुग्रहं विना ते परम्, अत्यर्थम् । अगतिमन्तः=गतिहीनाः, गतिर्ज्ञानं तद्राहिताः, नैव ज्ञातृत्वं न चापि ज्ञेयत्वं निर्वोढुं समर्थाः, किञ्च परोनुत्तरो मः शिवः=परमशिवः शुद्धसंविद्रूपः, तेन परमशिवेनैव गतिमन्तो न तु स्वयं गतिमन्त इत्यपि बोद्धव्यम् । तदित्थंभूताः सन्तः स्वस्यावभा-

समात्रेऽपि यां वरकलां श्रेष्ठां कलां=कलनसामर्थ्यरूपां संविदाख्यां परां कामकलां भजन्ते सेवन्ते समाश्रयन्ते। सा अतुला=अनुपमा,तां विना निखिलः प्रपञ्चो जडोऽनेडमूककल्पः, सैव केवलं चेतना, ततोऽसावनुपमैव याथार्थ्येन पुण्या=सुन्दरी पवित्रा प्रतिपत्=प्रतिपत्तिरेव प्रतिपत् प्रकाशनविमर्शनशक्तिरूपा संविद्देवी श्रीमहात्रिपुरसुन्दरी विजयताम्=सर्वोत्कर्षेण वर्तताम्। सा तु स्वमाहात्म्येनैव सर्वोत्कर्षेण वर्तत एव। परं वयमेवं न प्रतीमः। ततः सा सर्वोत्कर्षेण विजयमानतयाऽस्मत्संवेदनाध्वनि प्रतिभासतामिति प्रार्थनायां लोट् ॥ ७ ॥

अथानेनात्मनः परशक्तेः स्पन्दरूपाया माहात्म्यं गीयते –

**ददाना विश्वेभ्यो ललितकलनामात्मनि हितां**
**दधाना दिव्यां कामपि सुखकलां विश्वभरणीम्।**
**छवीनां लालित्यं जगति सकलानां सुमनसां**
**कवीनां पाण्डित्यं जयति ललिता साऽमृतकला ॥८॥**

आत्मनि=स्वस्मिन् स्वरूपे। हितां=निहितां, स्वस्मिन्नेव वर्तमानां अथवात्मनि निहितामात्मनिहितामिति सप्तमीतत्पुरुषः। ललितकलनां=समस्तरमणीयवस्तुजातकलनशक्तिम्। विश्वेभ्यः=सर्वेभ्योऽपि जीवजातेभ्यो यथायथं ददाना। कामपिचानिर्वचनीयां, विश्वभरणीं=विश्वभरणपोषणधारणकारिणीम् दिव्यामलौकिकामाश्चर्यरूपां सुखकलां=सुखसङ्कलनशक्तिं, सर्वानपि जीवान् सुखयितुं समर्थाम्। सुरुचिरां कृतिं दधाना=सततं धारयन्ती, निर्वहन्ती। सा=काप्यनुभूतचरी, ललिता=सुरम्यतमा। अमृतकला=मरणरहिता, शाश्वती कला=कलनशक्तिर्निर्माणशक्तिः स्वात्मशिवस्य, जगत्सृष्टिसंहारादिसमर्था पराशक्तिः, ललिताम्बेति प्रसिद्धा, अमृतप्रदाऽमृतमयी वा कला स्वात्ममहेश्वरस्य। जगति=संसारे। सकलानां सुमनसां पुष्पाणां छवीनां=शोभानां लालित्यं=माधुर्यं, रम्यत्वं, मनोहरत्वं, चमत्कारकारिसरसकाव्यरचनाचतुराणां कवीनामपि च पाण्डित्यं जयति=उभयमप्यतितरामतिशेते। पारमेश्वरी ललिताम्बाख्याऽमृता शक्तिर्हि विश्वकाव्यं कवयन्ती विश्वनाट्यं च नाटयन्ती सदैव स्वरसे माद्यन्ती कालिदासादीनां महाकवीनां पाण्डित्यमतितरां जयन्ती, कुसुमादीनां च लालित्यमपि स्वकीयापरिमितलालित्यमाहात्म्येन तिरस्कुर्वत्युभयमपि जयतीति नात्र संशयलेशोऽपि। सर्वस्य लालित्यस्य सर्वस्य च कवित्वस्य तदंशमात्रोपजीवित्वात् ॥८॥

अथानेन दीक्षितस्य सच्छिष्यस्य किमपि माहात्म्यं गीयते—

**गुरुश्रीश्रीपादाम्बुजभवपरागाञ्जनवती**
**दृगात्मानं द्रष्टुं समरसशिवैश्वर्यमहितम् ।**
**विशालं सामर्थ्यं सपदि लभते कापि रुचिरा**
**नमामस्तां वामो विधिरपि सदा पूजयति याम् ॥९॥**

कापि=अवर्णनीयमहिमा, गुरुश्रीः=गुरुरूपा विभूतिः=पारमेश्वरानुग्रहलक्ष्मीः, तस्याः श्रीयुक्ते ये पादाम्बुजे, तद्भवो यः परागः पुष्पान्तर्वर्त्ति सुगन्धि रजः, तेनाञ्जनवती=गुरुवरचरणकमलपरागेन कृताञ्जना या कापि दृक्=सच्छिष्यदृष्टिः, सैव समरसं=सर्वथापि निमग्नीकृतभेदभावं प्रकाशविमर्शसुसमरसाकारं यच्छिवैश्वर्यं परम शिवस्य परमशिवत्वं, तेन महितं=सम्पादितमाहात्म्यम्, आत्मानं=स्वात्मपरमेश्वरं, दृगात्मानं संवित्स्वरूपमिति दृक्शब्दस्यावृत्त्या योजनेनैवं द्रष्टुं=स्वप्रकाशतया साक्षात्कर्तुम्, विशालम्=अपरिमितम् सामर्थ्यं शक्तिम् सपदि=अतित्वरितं लभते= प्राप्नोति, स्वात्मपरमेश्वरत्वसाक्षात्कारसमर्था भवति, अनेनैव च सामर्थ्येन रुचिरा= सुन्दरी याऽसौ सच्छिष्यदृष्टिः, तां वयं नमामो यां स्वभावेन वामोऽपि विधिः सदा पूजयति, न तद्विषये वामतामभ्यसितुं प्रभवति। विधिस्तु नियतिशक्त्यधीनः सन्नेव जीवेषु स्वकीयां बहुलतयानुभूयमानां वामतामभ्यस्यति।परं समवाप्तसद्गुर्वनुग्रहस्ततश्च लब्धस्वात्मसाक्षात्कारो महापुरुषो मायामप्युल्लङ्घ्य वर्तते का पुनः कथा नियतेः। अतो नियतिशक्त्यधीनो विधिरेवंविधस्य महापुरुषस्य यथार्थदर्शिनीं दृशं पूजयत्येवेति तात्पर्यम्। दृक् च ज्ञानं, दृष्टिरपि च। वाच्यार्थत्वेन दृष्टिः, व्यङ्ग्यार्थत्वेन ज्ञानम्। किञ्च वामो विधिस्तन्त्रशास्त्रेषूपदिष्टो वामाचाररूपोऽपि विधिः, यां व्याख्यातपूर्वां दृशं पूजयत्येव सदा, तदुपायतां भजमानस्तत्रप्रह्वो भवतीति ॥९॥

अनेन वञ्चनया यशःकामानामाधुनिकानां यशस्विनां कृते किमप्युपदिश्यते —

**असत्याभिर्वाग्भिर्जनहृदयमाकृष्य सहसा**
**वयस्य ! स्निग्धाभिः श्रवणमधुराभिश्च सततम् ।**
**यशः प्राप्तं लोके किमु यमपुरीवैतरणिका-**
**सरित्पारं नेतुं प्रतिपदमगाधं प्रभु भवेत् ॥१०॥**

हे वयस्य ! मित्र ! स्निग्धाभिः=आपाततः स्नेहरससिक्ताभिः, मनसः प्रियाभिः श्रवणमधुराभिः=मधुरश्रुतिभिः असत्याभिर्वाग्भिः। सहसा=सत्वरम् जनहृदयमाकृष्य, सततमविच्छिन्नं यथा स्यात्तथा लोके प्राप्तं यशः प्रतिपदं=पदे पदे, अगाधं=गाहितुमशक्यं यद् = यमपुर्यां या वैतरणिकानामसरित्=नदी, तस्याः पारं तत्र नेतुं प्रभु= समर्थं भवेत् 'किमु' इति प्रश्नः। तत्पारं नेतुं समर्थं न भवेदिति काका व्यज्यते। असत्यभाषणेन मुग्धजनहृदयान्याकृष्यार्जितं यशो न कस्मा अपि स्वात्मनः पारमार्थिकप्रयोजनायालम्। इह वञ्चनापटुत्वेन यशःप्राप्त्या किम्। यमपुरीगमनसरणौ या वैतरणिकानामनदी, तस्या यत् प्रतिस्थानमगाधं पारं तत्र प्राप्तौ न तद्यश उपायतां यायात्। तत्र नद्यामीदृशानां कपटार्जितयशसां सततं निमज्जनमेव भावीति तात्पर्यम्॥ १०॥

अनेन साधारणं जनं प्रति तस्यैव हिताय किमप्युपदिश्यते—

**कृतीनां सर्वासामुरसि करमाधाय नियतं**
**विचाराय स्वान्ते निजविरचितानां सुमतिमान्।**
**सपत्नानां षट्कं क्षणमिह समुत्सार्य परतः**
**सुशीतान्मस्तिष्कात्सुचिरमवकाशं वितरतु॥ ११॥**

सुमतिमान् = सद्बुद्धियुक्तो जनः। सपत्नानां निजहृदये कृतवसतीनां, स्वात्मोन्नतौ विघ्नकराणां कामक्रोधलोभमोहमदमात्सर्याख्यानां सपत्नानां स्वात्मशत्रूणां षट्कं क्षणं परतो=दूरे समुत्सार्य=स्वचेतसो बहिर्निष्कास्य, उरसि=हृदये करं= हस्तमाधाय=निधाय, हृदयं निजं शान्तकल्लोलं कृत्वा, नियतमवश्यमेव, सुशीताद् हृदयस्य शान्तत्वेन, कामाद्यपसारणेन च शैत्यं शान्तिमधिगततववः सदसद्विवेकसमर्थतामुपयाताद् तद्धेतुभावं नीतान्निजान्मस्तिष्कान्निजविरचितानां=स्वयं कृतानां पुण्यापुण्यमिश्ररूपाणां कृतीनां क्रियाणां स्वान्ते=स्वान्तःकरणे विचाराय कृतय इमामदीयाः पुण्या वा अपुण्या वेति विवेकाय सुचिरं=चिरकालमवकाशं वितरतु=ददातु। अपरेषां दोषदर्शनं तु सुकरं सर्वेषाम्। परं सुमतिभिः स्वकृतानां कर्मणां विषये कामक्रोधाद्यूर्मिरहितेन मनसा सुचिरं विचारणीयम्, पुण्यानि मत्कर्माणि पापानि वेति। एवंकरणेन सुमतिमान् पुण्ये प्रवर्त्स्यते पापाच्च निवर्त्स्यते कदाचिन्मानव

बुद्धिर्मोहवशादपुण्यं पुण्यमिति पुण्यं चापुण्यामिति मन्यते । एतद्दोषनिवारणायैवारीणां षट्कं समुत्सार्य सुशीताच्छान्ताद्विवेकसमर्थान्मनसा विचारणीयानि निजकर्माणीत्युपदिश्यते ॥ ११ ॥

अथानेन सांसारिकाणां विषयाणां क्षणभङ्गुरत्वं मनाग्गीयते—

**इतश्चेतो धावत्यनिशमतिरागान्धितमति-**
**र्जनोऽयं संसारे पशुरिव यदर्थं सुहृदये ! ।**
**स सोऽर्थः सर्वोऽपि क्षणरुचिसमश्चञ्चलतरः**
**कथङ्कारं दातुं प्रभवतु सुखं शाश्वतमहो ॥१२॥**

अये !=हे सुहृद् ! मित्र ! संसारे=जगति, जनोऽयं अयं संसृतिसागरे मुहुर्मुहुरावर्तमानो जीवः, जन इति पुनः पुनर्जायमानः अनिशं सततं अतिरागेण=अतीवासक्त्या, अन्धिता=अन्धीकृता मतिर्यस्य रागकालुष्येण हेतुना विवेकरहित बुद्धिरत एव पशुरिव विवेकशून्यः चतुष्पाजन्तुरिव यदर्थं=यस्य विषयजातस्यार्थे, इतश्चेतश्च=समन्ततो धावति स स सर्वोपि नाम विषयरूपोर्थः क्षणमेव रुचिर्यस्याः सा क्षणरुचिर्विद्युत्, तत्समः=तद्वदेव चञ्चलतरः, अतीव चञ्चलोऽस्थिरः क्षणदृष्टनष्टः, न चिरसुखहेतुरिति, ततः सोऽन्तःकरणबहिष्करणानां सुखादी रूपादिश्चार्थः । कथङ्कारं=केन नाम प्रकारेण, शाश्वतं=नित्यं सुखं दातुमहो प्रभवतु । सम्प्रश्नेऽत्र लोट् । नैव चिरसुखं कथमप्यसौ दातुमलमिति व्यज्यते । ततस्तदर्थं पशुवन्न समन्ततो धावितुं युक्तं, चिरसुखप्रदाय स्वरूपसाक्षात्कारायैव मानवैर्यतनीयम् । अन्यथा पशुभ्यो मानवानां को विशेषः ? पशूनामपि विषयसुखार्थं सततं यतमानत्वात् ॥ १२ ॥

अथैतेन जनसाधारणस्य मैत्रीविरोधयोर्विषयेऽस्थिरचित्तत्वेन तद्विषयेऽनवधेयत्वमुपेक्षणीयत्वमुपदिश्यते—

**विरोधो मैत्री वा समुदयति यल्लोकहृदये**
**न तत् स्थायी भावः कृतकमिति जानातु निपुणम् ।**
**तमानन्दं विन्देत् कथमिव तदालम्ब्य मतिमान्**
**नरः स्थायी भावो रस इति वृतं पण्डितवरैः ॥ १३॥**

विरोधो=द्वेषो, मैत्री=मित्रभावो वा यत् सामान्ये नपुंसकं, लोकानां= साधारणानां जनानां हृदये समुदयति=उदयं प्राप्नोति, तत् विरोधमैत्रीप्रभृति, अत्रापि सामान्ये नपुंसकत्वम् । स्थायी भावः=स्थिरत्वेन वर्तमानं हार्दं वस्तु नैव भवति । साधारणजनानां विरोधोऽप्यस्थिरो मैत्र्यपि तेषामस्थिरैवेत्यतः तत् सर्वं सुजनः कृतकं=कृत्रिममेवेति निपुणम्=नैपुण्येन यथास्यात्तथा सम्यग् जानातु । तदस्थिर विरोधमैत्र्याद्यालम्ब्य=आश्रित्य तं प्रसिद्धं स्थिरत्वेन रसत्वेन ख्यातमानन्दं मतिमान् बुद्धिमान् नरः=श्रेष्ठो जनः कथमिव=केन खलु प्रकारेण, विन्देत्=लभेत । प्रश्नेऽत्र लिङ् । नैव लभेतेति व्यज्यते । यतः स्थायी भावः=स्थायित्वेनैव वर्तमानो रत्यादिः । नतु व्यभिचारित्वेनापि वर्तमानः, रसः श्रृंगारादिरिति वृतं स्वीकृतं, पण्डितवरैः । कृत्रिमभावावलम्बनेन कथमपि कस्यापि पूर्णानन्दलाभो न भवितुं शक्नोतीति तात्पर्यम् । रससिद्धान्तोऽत्र दृष्टान्तत्वेनैवोपात्तः ॥ १३ ॥

अथानेन पद्येन कौटिल्यस्य परित्याग उपदिश्यते —

**स्वकल्याणाकाङ्क्षा वसति यदि चित्तेषु सुजनाः !**
**प्ररूढं जिह्मं तज्जहित झटिति ध्वान्तकरणम् ।**
**न जिह्मानां प्राप्यं कथमपि सदालोकनयनं**
**यदायत्तैवास्ते जगति खलु निर्व्याजकरुणा ॥ १४ ॥**

हे सुजनाः=सज्जनाः ! यदि भवतां चित्तेषु=अन्तःकरणेषु स्वस्य=आत्मनः कल्याणस्य=कल्याणविषये कल्याणार्थम्, आकाङ्क्षा=समीहा, इच्छा यदि वसति= वर्तते, तद्=तदा, तर्हि ध्वान्तकरणम्=अन्धकारकारकं, ज्ञानं विवेकं चावृत्याज्ञान-विस्तारकं, प्रकर्षेण रूढम्=सम्प्राप्तसम्यग्विकासं जिह्मम्=कौटिल्यं जहित । प्ररू-ढस्य कौटिल्यस्य त्यागेनैव स्वात्मनः कल्याणं सुखमवाप्तुं शक्यम् । यतो जगति=संसारे निर्व्याजा व्याजरहिता=दम्भरहिताऽकृत्रिमा शुद्धा वास्तविकी करुणा यस्य आयत्तैव= अधीनैव, यदाश्रितैवास्ते=वर्तते, तदिति शेषत्वेनाध्याहार्यम् तत् सदालोकनयनम् सन् चासावालोकश्च सविवेकं सज्ज्ञानं न तु दीपादिप्रकाशः सदालोकः, आलोक्यते सच्चासच्चानेनेत्यालोकः, स एव नयनं=नेत्रं सज्ज्ञानरूपं नयनं, तन्नयनं जिह्मानाम्= कुटिलानां, अर्श आदित्वादत्र मत्वर्थीयोऽच्प्रत्ययः, तेन जिह्मानां=जिह्मवतां=कौटिल्य-युक्तानां न प्राप्यम् । कुटिलाः सदालोकनयनं नैव लब्धुमलम् । सदालोकनयनाधी-

नैव च निर्व्याजकरुणा। एवंविधायाः करुणाया अभ्यासेन स्वात्मकल्याणलाभः। करुणया हि चित्तं कमलतां याति। ततस्तत्र भगवद्भक्तिः पदं दत्तुमलं भवति। तया च पर्यन्ते परिपूर्णमात्मकल्याणं सुलभम् ॥ १४ ॥

अथानेन कृतशास्त्रपरिश्रमान्, परमनाराधितपरमेश्वरचरणसरोजान् विदुषोपि प्रबोधयितुं, किमपि प्रश्नमिषेणोपदिश्यते—

**विदां वृन्दे प्राप्तः पठनपरिपाटीषु पटिमा**
**मनः शान्ते स्वान्ते स्मरहरपदान्ते न गमितम् ।**
**शरीरान्ते पाशं गतवति कृतान्तस्य सहसा**
**किमाभीलं धीमन् ! जनिमरणजालं परिहरेत् ॥ १५ ॥**

हे धीमन्! बुद्धिशालिन् ! त्वया तु विदन्तीति विदो=विद्वांसः, तेषां वृन्दे=समाजे, पठनस्य परिपाटीषु=प्रक्रियासु पटिमा=पटुत्वं, प्राप्तः=समवाप्तम्। विद्वज्जनसहवासेन त्वं शास्त्रपठनपाठनादौ पटुः सञ्जातः। परं शान्ते=शान्तकामादिकल्लोले स्वान्ते स्वहृदये सति, स्मरहरस्य=कामारेः, स्वभक्तानामपि कृते कामादिविघ्नप्रशमनहेवाकदुर्ललितस्य भगवतः शिवस्य पदान्ते=चरणसरोजातमूले, निजं मनस्तु न गमितम्। हृदयं शान्तं विधाय त्वया मनः परमेश्वरचरणार्चनध्यानादौ न नियोजितम्। केवलं त्वया शास्त्रपठनाद्यभ्यास एव कृतः। ननु शरीरान्ते=मृत्युसमये कृतान्तस्य=महाकालस्य पाशं, त्वयि गतवति सति, यज्जनिमरणजालं=जननमरणचक्रमतीवाभीलं=कष्टं दुःखप्रदं, तत् किमसौ पठनपरिपाटीमहिमा परिहरेत्= निवारयेत्। न निवारयितुमसौ समर्थ इतिध्वनिः। पारमेश्वरीभक्तिरेव जननमरणजालात् त्रातुमलं, न शास्त्रपठनादिनैपुण्यम्। तत्तु शरीरान्तपर्यन्तमेव किमपि स्वाभिमानमात्रप्रपूरकम्। न तत् संसृतिजालात्त्रातुमलम्। अतः शास्त्राभ्यासं विधाय परमेश्वरचरणकमलार्चनध्यानादिकमेवानुरक्तेन कामादिकालुष्यरहितेन च मानसेनाभ्यसनीयम्। येन पुनः संसृतिसमुद्रे पातो न भवेत् ॥ १५॥

अथानेन यशःकामान् परं भगवद्भक्तिपराङ्मुखान् जनान् प्रबोधयितुमुपदिश्यते—

**दिगन्ते विश्रान्ता परिणतशरच्छीतकिरण-**
**प्रभाजालग्रासीकरणनिपुणा कीर्तिरतुला ।**
**समर्था नैव स्यात्प्रतिभयभवाम्भोधितरणे**
**विहायैकां तां श्रीचरणयुगलीभक्तितरणिम् ॥ १६॥**

एकामद्वितीयां तां प्रसिद्धां श्रीचरणयोः=भगवतः श्रीसनाथयोश्चरणयोर्या-युगली=भगवच्चरणकमलयुगलम्, तद्विषयिणी या भक्तिरूपा तरणिः=नौः, तां विहाय=परित्यज्य, भवः=जननमरणरूपः संसारः संसृतिः, सैवाम्भोधिः=समुद्रः, प्रतिभयो=भयानकोऽसौ संसृतिसमुद्रः, तस्येदृशस्य जलधेस्तरणे, दिगन्ते=दिशां प्रान्तभागे विश्रान्ता दिगन्तं यावत् प्रसृता, परिणतः=परिपूर्णो यः शरत्कालीनः शीतकिरणः=चन्द्रः, तस्य यत् प्रभाजालं, जोत्स्नापुञ्जः, तस्यापि ग्रासीकरणे=कवलीकरणे निपुणा प्रवीणा, अतुला=तुलयितुमशक्या, कीर्तिः=यशःपटली, सा पूर्वोक्त-संसृतिसमुद्रतरणे समर्था=शक्ता नैव स्यात्=नैव भवितुं शक्नोतीति शक्यार्थे लिङ्। कीर्तिरपि धवलतयाख्याता, कौमुद्यपि सदा धवला। कस्यापि कीर्तिविभूषितस्य जनस्यातुला राकाशशाङ्कजोत्स्नापेक्षया चाधिकमुज्वला कीर्तिरपि भगवद्भक्तिनौकां विहाय तं कीर्तिमन्तं जनं संसृतिसमुद्रस्य पारं नेतुं नालं भवतीति भक्तिहीनया कीर्त्याऽप्यलम्। तेन कीर्तिप्रदानि शुभकर्माणि कुर्वतापि सज्जनेन सदैव भगवच्चरण-सरोजयुगलीभक्त्योपरञ्जनीयं निजं चेतो येनासौ देहान्ते संसृतिसमुद्रमुत्तर्तुमलं भवेत्। श्रीचरणयुगलीशब्देनात्र श्रीगुरुचरणयुगलं वाभिप्रेतम्। तद्भक्तिरपि नौरिव समुद्रमिव संसारं तारयितुमलं भवति। सद्गुरुश्च मूर्त्तिमान् परमेश्वर एवेति सद्गुरु-चरणकमलभक्तिरेव भगवच्चरणकमलभक्तिः। भगवतः परं स्वरूपं तु न भक्त्यादि व्यवहारविषयतायोग्यम्, तत्र सर्वस्यापि व्यवहारस्य विगलनात्। ततः साक्षात्कृत-स्वात्ममहेश्वरभावः सद्गुरुरेव व्यवहरणयोग्यो भगवान्। तस्यैव भक्तिर्भगवद्भक्तिरिति बोध्यम् ॥१६॥

अथानेन गुरुवरचरणसरोजसेवापूर्वकं स्वात्मभजनं प्रति स्वकीयं चित्तमेव सम्बोध्यते—

**परागाढ्यं श्रीसद्गुरुचरणपाथोजयुगली–**
**समूढं हे चित्तभ्रमर! मकरन्दामृतरसम्।**
**समासाद्योन्माद्यन् प्रतिभयजरामृत्युहरणं**
**भजेथाः स्वात्मानं निरतिशयमानन्दसदनम् ॥१७॥**

हे चित्तभ्रमर! चित्तमेवभ्रमरः, स एवात्र सम्बुध्यते परागैः=पुष्पान्तर्वर्तिभी रजोभिराढ्यं = समृद्धं, श्रीयुक्तौ यौ सद्गुरोश्चरणौ तावेव पाथोजे = जलजे =

कमले, तयोर्या युगली चरणकमलयुगलं, तेन समूढं=धृतं, प्रतिभये=महाभयानके, जरा=वार्धक्यं च मृत्युश्चेति ते हरतीति तच्छीलो यो मकरन्दः मधु तदेवामृतरसस्तं, गुरुवरचरणकमलमधुसुधां समासाद्य=सम्यग् आसाद्य=प्राप्य, तत्प्रभावेणोन्माद्यन्=उद्गतमदो भवन्, निर्गतोऽतिशयो यस्मात्तत् सर्वातिशायि यदानन्दस्य सदनं=गृहं तद्रूपं स्वात्मानं भजेथाः=भजस्व गुरुवरचरणकमलमधु निपीय तेन सम्मदमनुभवन्नपरिमितानन्दमयं स्वात्मानमेव भजस्वेति। स्वात्मैव हि वस्तुतः परमेश्वरः। अत्रावभासमानो यः सङ्कोचः शरीरादिरेवाहं न निखिलं ब्रह्माण्डं न चापि शुद्धं संविन्मात्रमित्येवंप्रकारः, स तु केवलं स्वात्मन एव स्वातन्त्र्यशक्त्या प्रकल्पित एवावभासते। अतोऽसौ न तात्त्विकः। तात्त्विकं च स्वात्मनो रूपं विश्वनिर्भरं शुद्धं संविन्मात्रम्। तस्येदृशस्य तात्त्विकस्य स्वस्वभावस्य साक्षात्कार एव मुक्तिः। मुक्तिरेव जीवनस्य परमं प्रयोजनम्। असावेवंविधः स्वस्य साक्षात्कारः सद्गुरोरेवानुग्रहेण सम्भवतीत्यत एव सद्गुरुचरणकमलसमाराधनपूर्वकं स्वस्वरूपस्य हृदयङ्गमीभावकरणाख्यं तद्भजनमत्रोपादिश्यते ॥१७॥

अथानेन कामक्रोधाद्यभिभूतचेतसामपि मानवानां कृते शिवपदप्राप्त्युपायः कश्चनोपदिश्यते—

**ज्वलत्कामक्रोधावलिभिरवलीढेन मनसा**
**पुरारातेर्यद्यप्यतिकठिनमाप्यं शिवपदम्।**
**दयार्द्रस्वान्तश्रीगुरुचरणनिर्णेजनजलैः**
**पवित्रीभूतानां ननु तदपि किं स्यान्न सुलभम् ॥१८॥**

यद्यपि साधारणानां जनानां ज्वलन्तौ=देदीप्यमानावतिप्रवृद्धौ यौ कामक्रोधौ, कामक्रोधाभ्यामत्र लोभमोहमदमात्सर्या अप्युपलक्ष्यन्ते। तदेवमतिप्रवृद्धारिषट्कस्यावलयः पङ्क्तयो यास्ताभिरवलीढेन ग्रासीकृतेन, तद्वशंवदेन मनसा=चेतसा, पुरारातेः=त्रिपुरशत्रोः, शम्भोः सम्बन्धि शिवपदम्=परमशिवधामातिकठिनमाप्यं, न सुलभमीदृशेन मनसापि त्वतीव दुर्लभम्। तथापि दयया‍ऽऽर्द्रं द्रवीभूतं स्वान्तं हृदयं यस्य तस्य श्रीगुरोर्यौ चरणौ तयोर्निर्णेजनजलैः=प्रक्षालनजलैः पवित्रीभूतानां जनानां तदपि=परमशिवधामादि, ननु किं सुलभं न स्यात्। नात्र काकुः। स्यादेव सुलभमिति ध्वन्यते। दयार्द्रस्य गुरोः कृपा कामक्रोधादिकालुष्यदूषितानामपि जनानां हृदयानि

पवित्रीकर्तुमलम् । पवित्रीभूतेषु च हृदयेषु परमशिवपदमपि तेषां सुलभमेवेति भावः ॥ १८ ॥

सदसद्विवेकेऽप्यसमर्थानां जनानां विवेकलाभोपायोऽनेन कश्चनोपादिश्यते —

अकल्याणं कीदृक् कृतमिह हि कल्याणमपि वा
रजोरागैर्लिप्तं प्रभवति न चित्तं कलयितुम् ।
समर्था निर्णेतुं गुरुपदपरागाः स्वकलया
सखायस्तेऽतः स्युः सकलकलनाकल्पतरवः ॥१९॥

इह हि जगति जनानां चित्तं प्रायशो रजोगुणाश्रितै रागैर्लिप्तं भवति । रजसात्र तमसोऽपि ग्रहणम् । रागश्च द्वेषस्याप्युपलक्षकः । एवं जनसाधारणचित्तं रागद्वेषकलुषं सद् एतत् कलयितुं = सुनिर्णेतुं न प्रभवति = न शक्नोति, यन्मया कीदृक् कल्याणं कृतं कीदृग्वाऽकल्याणं कृतमिति । स्वकृतानां कर्मणां पुण्यात्मकत्वा पुण्यात्मकत्वनिर्णये जनानां चित्तं कालुष्यदूषितत्वेन समर्थं न भवति । अतोऽत्र सकलानां = सर्वासां कलनानां = ज्ञानात्मिकानां कृतीनां कृते कल्पतरवः = कल्पवृक्षरूपाः सङ्कल्पमात्रेणाखिलज्ञानसामर्थ्यप्रदाः, गुरुपदपरागाः = गुरोःचरणयो रजांसि, स्वकलया = स्वस्य नैपुण्येन सर्वं कल्याणत्वाकल्याणत्वादिकं निर्णेतुं समर्थानि = शक्तानि सन्ति, गहनेऽत्र विषये त्वत्साहाय्यकरणात् ते = तव सम्बोध्यस्य संसारिजनस्य सखायः=सुहृदः, स्युः=भवेयुरिति सम्भाव्यते ॥१९॥

अथानेन परमेश्वरचरणकमलार्चनध्यानादिनिरतानां परं माहात्म्यं सुगीयते–

स्मरन्त्यश्रान्तं ये स्मरहरपदाम्भोजयुगलीं
हृदन्तस्तेषां नो भवति यमधानीगमनिका ।
परं ते विश्वेषां परमशिवधानीगुरुपदं
वहन्तो राजन्ते स्वबलदलिताशेषकलुषाः ॥२०॥

ये भक्तजनाः हृदन्तः=स्वकीये हृदये, स्मरहरस्य=कामारेः, स्वभक्तानामपि कामादिभ्यस्त्रातुर्भगवतः शम्भोः, पदाम्भोजयोः=चरणकमलयोर्युगलीं=द्वन्द्वम्, अश्रान्तं=सततमेव, स्मरन्ति=तद्ध्यानपरा एव ये भवन्ति, तेषां यमधानीं = मृत्युलोकं प्रति गमनिका = गमनं न भवति । भगवतो मृत्युञ्जयस्य चरणसरोज-

ध्यानतत्परा जनाः संसृतेर्मुक्ताः सन्तो यमलोकं पुनर्न गच्छन्ति । न केवलमेतावदेव, अपितिवतः परं तेषां माहात्म्यमेतद्यत्ते स्वबलेन=स्पन्दाख्येन निजसहजबलेन दलितानि = विनाशितानि, अशेषाणि = सकलान्यपि कलुषाणि मलानि यैस्ते तथाभूताः सन्तो, विश्वेषां सर्वेषामपि जीवानां कृते, परमशिवधान्याः = परमशिवपदस्य सम्बन्धि गुरुपदं = गुरुस्थानं वहन्तो = धारयन्तो राजन्तेऽतीव शोभन्ते । ते हि तथाविधं गुरुभावमपि लभन्ते येन जनान् परमशिवपदप्राप्तेर्मार्गप्रदर्शनसमर्था अपि भवन्ति । तेन च सर्वानपि तेन यमलोकगमनात् परित्राय परमशिवपदं प्रापयन्तोऽतीव शोभन्त इति किमुच्येत परमेश्वरचरणकमलध्यायिनां माहात्म्यम् ॥२०॥

अथानेन सर्वमपि विषयजातं स्वात्मशिवाग्नौ जुह्वतो भैरवीयं धाम भजमानस्य परयोगिनः किमपि वर्णनं विधीयते –

**स्तुतिर्वा निन्दा वा भवति यदि तत्तिष्ठतु तथा**
**निजानन्दे मग्नं विचलयितुमीष्टे न किमपि ।**
**अभद्रं भद्रं वा भवति भविकं स्वात्मनि हुतं**
**न सन्देहस्पन्दो मम तु विषयेऽस्मिन् सुविषमे ॥ २१ ॥**

स्वात्मशिवाग्नावखिलमपि रागद्वेषसुखासुखोदयलयादिकं तृणयतः प्राणापानौ समाने लयीकुर्वतस्तमपि चोदानवह्निना प्लोषयतः परयोगिनो लोके यदि स्तुतिर्वा निन्दा वा भवति तत् स्तुतिनिन्दात्मकं सर्वमपि यथा वर्तते तथा तिष्ठतु=वर्तताम् । अकिञ्चित्करत्वेन तस्यात्र विषयेऽत्यन्तमुपेक्षा । यतो निजानन्दे = स्वात्मानन्दसागरे, मग्नं = सर्वथा सर्वतश्चानन्दमयतामनुभवन्तं, तं, किमपि स्तुतिनिन्दादिकं, स्वाऽऽनन्दपरमास्वादाद्विचलयितुं नेष्टे = ईश्वरं न भवति = समर्थं न भवति । मम= ग्रन्थकर्तुः सुविषमे = अतिगहने, सम्यग्ज्ञातुमशक्येऽस्मिन् परयोगिनो लोकव्यवहारलोकलज्जालोकनिन्दादावुपेक्षारसे व्यवहारे, सन्देहस्पन्दः=सन्देहस्यात्यन्तमणीयस्यपि गतिरिव नास्ति, यत्तस्य भैरवीयं धाम श्रयतः परयोगिनोऽभद्रं=दुःखादिकं वा, भद्रं= सुखादिकं वा सकलमपि भविकं=सांसारिकमैन्द्रियकं वा मानसं वा बौद्धं वाऽहङ्कारिकमपि वा विषयजातं तस्य स्वात्मनि = स्वात्मशिवाग्नावुदानाख्ये प्राणे हुतम् = आहुतिरूपतां प्राप्तं भवति । सर्वमप्यसौ चिदग्नौ समर्पयन् चैतन्ये विलापयन् विजयते ।

एतदेवाभिप्रेत्य स्तुतं श्रीशङ्कराचार्येण –

**जपो जल्पः शिल्पं सकलमपि मुद्राविरचना**
**गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।**
**प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा**
**सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ( सौ. ल. ) इति. ॥२१॥**

अथानेन पारमेश्वरानुग्रहशक्तिपातस्य माहात्म्यं किमपि गीयते –

**अजानन् वा जानन् दुरितरचने बद्धहृदयो-**
**ऽप्यकस्मादेवायं शिवसकरुणालोकपतितः ।**
**मुनीनां चेतोभिर्दलितकलुषैरेव सुलभा-**
**महो धन्यः कोऽपि श्रयति खलु निर्वाणपदवीम् ॥२२॥**

अजानन्=इदं दुरितमिति, न जानन्, जानन् वा=इदमेवमिति जानन्नपि वा, बुद्धिपूर्वकं दुरितरचने = पापकर्मकरणे बद्धं हृदयं यस्य सः पापकृदप्ययं जीवोऽकस्मादेव शिवस्य यः सकरुणः करुणया परिपूर्ण आलोकः=आलोकनम्, अनुग्रहदृष्ट्याऽऽलोकनमनुग्रहशक्तिपातत्वेन प्रसिद्धं, तत्र पतितः–तद्गोचरतां प्राप्तः, शिवेन करुणार्द्रेण दृष्टिपातेन दृष्टमात्रः सन्, तदनुग्रहपात्रतयैव च धन्यः सन् कोऽपि दलितकलुषैः=प्रक्षालिताणवमायीयकार्ममलैर्दूरीकृतकामक्रोधाद्यरिषड्वर्गैर्वा, मुनीनां=सिद्धजनानां चेतोभिर्हृदयैरेव न त्वन्यैरस्मादृशसाधारणजनहृदयैः, सुलभां निर्वाणपदवीं मुक्तिदशां पूर्वोक्तः कोऽपि धन्यः शिवानुग्रहशक्तिपातेन सद्यः पवित्रीकृत एव श्रयति तत्र विश्राम्यति । देहे तिष्ठन्नपि निर्वाणदशामाश्रयति, जीवनमुक्ततायां सुविलसति । शक्तिपात एव हि स्वात्मज्ञाने कारणम् । स्वस्वरूप-सम्यग्ज्ञानेनैव मुक्तपदावाप्तिः । स च शक्तिपातो यस्मिन्नपि पुण्यकारिणि पातकिन्यपि वा भवेत्, स ज्ञानावाप्तिपूर्वकं मुक्ततामचिरेण भजते । पुण्यात्मापि पारमेश्वरं शक्तिपातं विना मायोदधौ लुठन्नेव वर्तते न ततो मुच्यते इति किमुच्येत माहात्म्यं शिवसकरुणालोकलक्ष्म्याः । पारमेश्वरानुग्रहशक्तिपात एव मुक्तेः मूल-कारणमिति तात्पर्यम् ॥२२॥

अथ शिवविमुखं जनं कामादिवर्गः कथं कदर्थयतीत्युपदर्श्य शिववैमुख्य-परित्यागोऽनेनोपदिश्यते—

**प्रदर्श्यादौ मैत्रीं मनुजमपि हालाहलवतीं**
**सुधाधारापूतामिव जगति कामादय इमे ।**
**कृतघ्ना निघ्नन्तः शिवविमुखमन्तेऽक्षमतया**
**हसन्ति प्रोद्दामं शिवविमुखतां तज्जहित भोः ॥ २३ ॥**

इमे सर्वैरनुभूयमानाः कामादयः=कामक्रोधलोभमोहमदमात्सर्याख्याः षडरयो जगति=संसारे मनुजमपि=बुद्धिविभवशालिनं मानवमपि, नैव पुनः कापि कथा प्रकृतिमूढानां पशुपक्षिमृगादीनां कृमिकीटादीनां स्थावराणां च, आदौ हालाहलवतीं =कालकूटाख्यविषयुक्तां निजसम्बन्धिनीं मैत्रीं=मित्रतां सुधाया=अमृतस्य धाराभिः आसमन्तात् पूतामिव=पवित्रीकृतामिव प्रदर्श्य, अथवा स्वभावतो हालाहलवती-मप्यापाततः सुधाधारापूतामिव मैत्रीमिति सम्बन्धः । कामादीनां मैत्री श्रेयः-प्रतिपन्थित्वादवस्तुतो विषमय्यपि सती प्रेयोरूपत्वादमृतमयीव मुग्धानां प्रतिभा-तीति तात्पर्यं, अन्ते=पर्यवसाने शिवविमुखं=परमेश्वराद् विमुखं=अनास्वादित-परमेश्वरभक्तिरसं जनम् । अक्षमतया=असमर्थतया=कामादीन् पूरयितुमपि परित्य-क्तुमपि चासमर्थतया हेतुभूतया निघ्नन्तः = निःशेषेण घ्नतः अधोऽधः पातयन्तः । कृतघ्ना इमे पूर्वोक्तस्वभावाः कामादयः,प्रोद्दामं हसन्ति=उच्चैरट्टहासं कुर्वन्ति। तत्= तस्मात्, कारणात् भोः=हे सज्जनाः, शिवविमुखतां=परमेश्वरपराङ्मुखतां, जहित= परित्यजत । अन्यथा कामादीन्=भोक्तुमपि मोक्तुमप्यसमर्थाः सन्तः तैः सततं कदर्थ्य-ध्वे,यो हि शिवविमुखो न भवति प्रत्युत शिवभक्तिपवित्रीकृतहृदयो भवति तस्माद् भीत-भीताः कामादयः स्वयमेव तं परित्यजन्ति । तेन चासौ शिवमार्गेऽग्रेसरो भवति ॥ २३ ॥

ये खलु सज्जनान् निन्दन्ति ते तेषां पातकान्यादाय तान् पापरहितान् कुर्वन्त उपकुर्वन्त्येवेति सज्जनैस्तेषां विषय उपेक्षैव कार्येत्युपदिश्यतेऽनेन—

**नरांस्ताञ्जानीहि प्रकटमनुकम्पार्द्रहृदयान्**
**यतन्ते ये निन्दां रचयितुमरे मानव ! तव ।**
**स्वयं स्वीकृत्यैते निरयशरणं घोरपतनं**
**पुनानास्त्वां नेतुं दिवमिव यतन्तेऽनवरतम् ॥ २४ ॥**

अरे मानव!=हे मानवोचितगुणयुक्तजन! ये नरास्तव निन्दां रचयितुं=कर्तुं यतन्ते=प्रयत्नं कुर्वन्ति, तान् नरान्, प्रकटं=स्पष्टम्, अनुकम्पा = दया तया आर्द्राणि हृदयानि येषां ताँस्तथाविधान् जानीहि। ये तव निन्दां कुर्वन्ति तानात्मनि करुणायुक्तानेव मन्यस्व। एते हि तव निन्दां कुर्वन्तः तव पातकानि स्वयमादाय निरयं=नरकमेव शरणं यस्येदृशं, घोरपतनं=भयानकं पतनं, स्वयमेव स्वीकृत्य, तव पातकानि स्वीकुर्वन्तस्त्वां तेभ्यः पुनानाः = पापरहितान् कुर्वाणाः त्वां दिवं पुण्यकृतां लोकं स्वर्गं नेतुम्, अनवरतं=सततगत्या यतन्त इवेत्युत्प्रेक्षा। त्वां पवित्रीकुर्वन्तस्ते तव स्वर्गलोकप्राप्तये यतन्त इव। अतस्त्वं तानात्मनो विषये करुणार्द्रहृदयानेव जानीहि मा तेषां कृते द्वेषं क्रोधं वा कुरु। निन्दका हि निन्दाविषयीकृतस्य जनस्य पातकान्यादधतीति प्रसिद्धेन वस्तुना तान् प्रत्युपेक्षैव बुद्धिमता कर्तव्येत्युपदेशः ॥२४॥

अद्यत्वे जना वेदशास्त्रादीनि पठन्ति रटन्ति तत्पुस्तकैश्च स्वहस्तकमले भूषयन्तो दृश्यन्ते। परं प्रायशस्तेषां सकलोऽपि व्यवहारः पातकबहुलो भवति। ईदृशानां पापाचारिणां कृते वेदशास्त्रादीन्यप्यकिञ्चित्कराणीत्युपदिश्यते असत्सङ्गश्च विनिन्द्यतेऽनेन पद्येन –

**असत्सङ्गान्नित्यं कपटपटिमानं श्रितवता-**
**ममीषां लोकानां विषयशकृदन्तर्विहरताम्।**
**न वेदैः शास्त्रैर्वा करतलगतैर्वा गलगतै-**
**रशान्तिः सा शक्या प्रशमयितुमन्तर्हृदि तता॥ २५॥**

नित्यं=सदैव, असतां सङ्गः=असत्सङ्गः, दुष्टसङ्गः, तस्मात् तेन हेतुभूतेन कपटे=छलबहुले व्यवहारे यः पटिमा=पटुत्वं, तं श्रितवताम्=कृताश्रयाणां, विषया= रूपादय एव शकृत्=पुरीषं, अनेन हेयत्वं विषयाणाम्, तदन्तस्तन्मध्ये कृमिकीटादिवद् विहरतां विहारं कुर्वाणानां, विषयलम्पटानां जनानाम्। अन्तर्हृदि=हृदयमध्ये, तता=विस्तारं प्राप्ता, अशान्तिः=कामादिलोलुपता, शान्तेरभावः सा करतलगतैः =हस्ताभ्यां गृहीतैर्वा, गलगतैः=कण्ठस्थीकृतैरपि वा वेदैः शास्त्रैर्वा सांख्यवेदान्तागमादिरूपैर्वा, प्रशमयितुं न शक्या। विषयलम्पटाः कृतशास्त्राभ्यासा अपि सततं

कामादिवशवर्त्तित्वाद्विषयलोलुपतया अशान्तमनस एव भवन्ति। शास्त्राभ्यासश्च तेषां केवलं कपटपाटवस्यैवोपयोगितां यातीति तात्पर्यम्। विषयेभ्यो विरक्तिरेव हि वस्तुतः शान्तिदायिनी। विषयविरक्तौ सत्यामेव च वेदशास्त्रादीनामुपयोगः शान्तिलाभायेतिभावः ॥२५॥

अथानेन मानवजीवनस्य साफल्यार्थं कश्चनोपाय उपदिश्यते सत्सङ्गस्य महिमा च गीयते—

तनूं लब्ध्वा रम्यामिह हि मनुजानामभिजने
दृशं प्राप्तुं पुण्यां सदसदवबोधप्रणयिनीम्।
न यैर्लिप्ता श्रीसच्चरणरजसा भालपटली
कथं तैः सम्प्राप्या त्रिपुरहरसायुज्यपदवी ॥२६॥

इह हि=अस्मिन् मर्त्यलोके हि, मनुजानां=मानवानाम्। अभिजने= वंशे मानवयोनौ, रम्यां=सुन्दरीं रमणीयां, करचरणादिकर्मेन्द्रियपटुत्वेन, चक्षुरादिज्ञानेन्द्रियकौशलेन, बुद्ध्याद्यन्तःकरणनैपुण्येन, समलङ्कृतां विवेकवैराग्यज्ञानादिसाधनभूताम्, अपूर्वया मस्तिष्कशक्त्या संवर्धितमाहात्म्यां, काव्यादिकलानिर्माणास्वादनसमर्थां वैराग्याभ्यासाभ्यां त्रिमलप्रक्षालनपूर्वकं परिपूर्णशुद्धप्रकाशविमर्शरूपस्वीयपारमेश्वरस्वरूपसाक्षात्कारसाधनभूततया चात्यन्तमेव रमणीयाम्, इतरेभ्यः स्थावरतिर्यगादितनूभ्योऽत्यन्तमुत्कृष्टां, तनूं = शरीरं मानवदेहरूपमासाद्यापि, यैः सच्चा सच्चेति सदसती तयोरवबोधः=इदं सद् इदं चासदितिविवेकः। तत्र प्रणयिनीं तत्प्रवणां सदसद्विवेकनिपुणां, पुण्यां=पवित्रां, ज्ञानरूपिणीं दृशं प्राप्तुं, श्रीयुक्तानां सतां सज्जनानां चरणरजसा पादधूल्या, निजा भालपटली=स्वकीयं ललाटफलकं न लिप्ता=न लिप्तम्। पुनः पुनः सज्जनानां चरणकमलेषु प्रणामा यैर्न कृता इति भावः त्रिपुरहरस्य = भगवतः शिवस्य सायुज्यं मोक्षविशेषः, तस्य पदवी = दशा शिवसायुज्यमुक्तिस्तैः = सज्जनप्रणतिपराङ्मुखैः कथं प्राप्या = प्राप्तुं शक्या नैव कथमपि प्राप्येति तात्पर्यम्। सत्सङ्गसत्प्रणतिप्रभृत्येव मोक्षोपाय इति ध्वनिः॥२६॥

अथानेन वराकस्य जीवस्याशक्तीनां वर्णनस्य मिषेण तस्यातीवकरूणास्पदत्वं निरूप्यते–

क्षणापायः कायो बलविरहितः प्राणविभवो
मनो विद्युल्लोलं स्मरशरहतं ज्ञानमपि तत् ।
अतिक्लिष्टं चित्तं विकृतमजराहंकृतिरियं
कथं जीवो यायादहह परमानन्दमतुलम् ॥२७॥

जीवस्य कायः=देहस्तावत् क्षणापायः=क्षणे=क्षणमात्रकालेऽपायो=विनाशो यस्य सः, क्षणभङ्गुरत्वमस्य शरीरस्य, तस्य प्राणानां = प्राणापानादीनां पञ्चानां यो विभवः=विभूतिः, असावपि बलेन रहितः, अत्यल्पबलयुक्ता जीवस्य प्राणाः, अल्पार्थेऽत्र नञर्थः पर्यवस्यति, मनोऽस्य विद्युदिव=तडिदिव लोलं=चञ्चलं, अस्य-यज्ज्ञानं तदपि स्मरस्य=कामस्य शरैर्हतम्, येनासौ संसारमसारं विजानन्नपि भोगेष्वेव रज्यति न भक्त्यां विरक्त्यां अभ्यासे वा। चित्तमस्य क्लेशैः=आविद्याऽस्मितारागद्वेषाभिनिवेशैः सांसारिकैर्धनदारपुत्रबान्धवादिसम्बन्धजैर्दुःखैर्वाऽभिभूतम्, अत एव विकृतं=सम्प्राप्तबहुविकारं इयमहङ्कृतिः=अहङ्कारोऽभिमानोऽस्य,अजरा=जरा-रहिता, सततयौवनशालिनी = मनागप्याशिथिला, ईदृशेऽशक्तीनां बाहुल्ये विद्यमाने सति वराकोऽयं अहह=खेदसूचकमेतदव्ययम्, जीवस्याशक्तिवर्णनावसरेऽनेनाव्ययेन कविः खेदं सूचयति, कीदृशोऽयं खेदस्य विषयो यदेतावतीभिरशक्तिभिराक्रान्तेना-प्यनेन जीवेनातुला परमानन्दपदवी प्रापणीया, तदसौ वराकस्तमतुलं=अपरिमितम-परिच्छिन्नं पारमेश्वरं परमानन्दं=परमानन्दात्मकं शिवभावं कथं यायात् गच्छेत् न यायात्=न यातुं समर्थो भवेदिति ध्वनिः, शक्यार्थेऽत्र लिङ्। शिवभावावाप्तिः खलु जीव-नस्य लक्ष्यं परमतीवाशक्तो जीवस्तल्लक्ष्यं कथमवाप्तुं शक्नुयादित्यतीव करूणापात्रता अस्य। अथवा स्मरशरहतमित्यपरं विशेषणं मनस एव, तदित्थं विद्युदिव चञ्चलं, कामशरपीडितं च जनस्य मनः। ईदृशेन मनसाऽसौ वराकः कथमिव परमानन्दं विन्देत्। ज्ञानेन परमानन्दप्राप्तिः सुलभेति चेत् कश्चिदुपदिशेत् तर्ह्यत्रोत्तरमुच्यते तत् प्रसिद्धं ज्ञानमात्मज्ञानमप्यतिक्लिष्टं क्लेशबहुलैरेव योगाभ्यासादिभिरुपायैः प्राप्यं सदतीव क्लिष्टमेव=क्लेशबहुलम्। ततः परमानन्दपदमत्यन्तं दुष्प्राप्यमेव ॥२७॥

अथानेनाविद्यापदपतितैः साधारणैर्मानवैर्विषयोपभोगेन क्रियमाणं मानवजीवनस्य दुरुपयोगमुपवर्ण्य तेषां खेदास्पदत्वं संसूच्यते –

**कृतानां पुण्यानां परिणतिमपूर्वां नरतनूं**
**समासाद्य ध्वान्तस्मरमथनसेवासमुचिताम् ।**
**मुधा क्षिण्वन्त्येते कुसुमशरसेवासु पतिताः**
**सुधां त्यक्त्वा हालाहलमहह गृह्णन्ति कुजनाः ॥ २८ ॥**

कृतानां=प्राग्जन्मसु सम्पादितानां, पुण्यानां=पुण्यकर्मणामपूर्वां=अतुलामदृष्टपूर्वामसामान्यां परिणतिं=फलपरिपाकं, पुण्यकर्मफलरूपां नरतनूं=मानवशरीरं-तत्रापि नरशरीरं=न नारीशरीरमतिदुर्बलम्, समासाद्य=सम्यग् आ समन्तात् सादयित्वा=अवाप्य, ध्वान्तम्=अन्धकारः=अज्ञानं=स्वस्वरूपाप्रत्यभिज्ञानं, तदेव स्मरः=कामदेवः, तस्य मथनः=मथनकर्ता, प्रकाशरूपः शिवः, अथवा ध्वान्तस्मरयोर्मथनकर्ता शिवः, तस्य या सेवा=परिचर्या, तस्य समुचितां अज्ञानविनाशकस्य परमेश्वरस्य सेवायामुपयोगिनीं, नरतनूं प्राप्य जनाः कुसुमशरस्य=कामदेवस्य सेवासु तदाज्ञापालनादौ पतिताः सन्तोऽमी कुजनाः=दुष्टमानवाः इमां नरतनूं मुधा=व्यर्थमेव निष्प्रयोजनं क्षिण्वन्ति=विनाशयन्ति । अहह, खेदस्यायं विषयो यदेते कुजनाः सुधाममृतं त्यक्त्वा = परित्यज्य=हालाहलं विषं गृह्णन्ति । भगवतो महेश्वरस्य पूजादिसेवाखल्वमृतमयी, कामक्रोधलोभपरवशता च विषमयी, दुष्टमानवाः अमृतमयीं महेश्वरपूजां परित्यज्य विषयविषास्वादनं प्रकुर्वाणा अहह दयापात्रभूताः । सुधापरित्यागपूर्वकस्य हालाहलग्रहणस्येह दृष्टान्ततयोल्लेखः । यथाऽमृतं परित्यज्य यो हालाहलं भुङ्क्ते, असावतीव खेदकरः सहृदयानां कृते, तथैवेमेऽविद्यापदपतिताः पारमेश्वरभक्तिपराङ्मुखा विषयलम्पटाः सांसारिका जना अपीति भावः ॥२८॥

परमेश्वररूपमात्मानमपि विप्रलब्धुमुद्यतां विषयोपभोगमृगतृष्णां प्रतीदं साश्चर्यं कथ्यते—

**अये ! मुग्धे स्निग्धे भवति मृगतृष्णेऽसति कया**
**प्रलब्धुं सामर्थ्यं वहसि कलया हन्त सकलम् ।**
**अपारं श्रीकान्तं कमपि चिदकूपारमतुलं**
**महान्तं स्वात्मानं सपदि विरमास्माच्छ्रमभरात् ॥२९॥**

अये=सम्बोधनमेतत्, विषयलोलुपतारूपिणी मृगतृष्णानेन पदेन सम्बुद्ध्यते । मृगतृष्णया विषयलम्पटतात्राध्यवसीयते । अये ! मृगतृष्णे=पर्यन्तेऽसफलतायुक्ते विषयलोलुपते ! पदान्तराण्यस्या एव विशेषणानि । तानि व्याख्यायन्ते, मुग्धे ! प्रौढतारहिते, प्रौढा हि तदेव कुरुते यद् युक्तं स्यादुचितं च, परमियं स्वमेवात्मानं वञ्चयितुमीहते, तदर्थं यतते चेत्यग्रे व्याख्यायते । अत एवेयं न प्रौढा अपि तु मुग्धैव= मोहबहुला मूर्खा च, स्निग्धे=स्नेहयुक्ते ! कान्तासाम्मिततया स्नेहपूर्वकं वञ्चनाकरण-चतुरेयम्, अथवाऽस्निग्धे=स्नेहरहिते, स्वात्मनोऽपि वञ्चनायां संलग्नत्वेन निःस्नेहे भवति=हे आदरणीये मृगतृष्णे=व्याख्यातरूपे । असति=सतीगुणरहिते स्वप्राणित कल्पस्य पत्युरपि वञ्चनाप्रवणत्वादसति ! हन्त=आश्चर्यमेतद् यत्त्वं सकलं=परिपूर्णम्, कलया शक्त्या सहितमिति वा पूर्णत्वेन चापारं=पाररहितमपरिच्छिन्नं, श्रियः= लक्ष्म्याः=विभूत्याः पञ्चविधकृत्यसम्पादनशक्तेः कान्तं प्रियं शिवरूपं, कमपि= अनिर्वचनीयमतुलम्=अनुपमं, महान्तं=विभुं सर्वत्रव्याप्तिमन्तं, चिद्रूपं=चेतना-मात्रतत्वम्, अकूपारं=समुद्रम्, अनिर्वचनीयं कमपि चैतन्यसमुद्रकल्पं, तव स्वस्याप्यात्मनोऽप्यात्मानं=स्वरूपं, विषयमृगतृष्णापि प्रकाशमयी सती प्रकाशरूपं स्वात्मानं वञ्चयितुं यतते, चेदसौ प्रकाशमाना न स्यात्तदा न प्रकाशेत=नावभासेत, अवभासते चासावतः प्रकाशरूपा सती स्वस्वरूपभूतमेव प्रकाशरूपं स्वात्मानं विप्रलभते अतोऽसौ पृच्छ्यते, यत्त्वमीदृशं स्वात्मानं प्रलब्धुं=विषयेषु योजनेन शिवरूपात्-स्वभावाज्जीवभावमवतीर्णं पुनरपि, जीवभावेऽप्यत्यन्तमधोऽधः पातयितुं, कया= अनिर्वचनीयया, अज्ञेयया कलया=निर्माणसामर्थ्यरूपया कया निजया वञ्चनापटुतया, सामर्थ्यं वहसि धारयसि । चिदब्धिकल्पमपि स्वात्मानं निम्नदशामवतारयासि पातयासि चानन्तयोनिषु जननमरणरूपे संसारचक्रे त्वामित्यहो कीदृशी विचित्रेयं तव वञ्चनाकलेत्याश्चर्यमिदं महत् ॥२९॥

अथानेन तावत् प्रत्यभिज्ञातस्वात्ममहेश्वरभावानां परयोगिनां विषये किमपि वर्ण्यते –

**महार्थं पूर्णार्थाः स्वरसपरिपुष्टाः स्वहृदये**
**स्वरूपं स्वाच्छन्द्यं सममनुभवन्तः स्वविलये ।**
**सदा ये स्वाधीनस्वललनकलाः कामकलयां**
**महासन्ध्या वन्ध्यासुतपरिणयं ते विदधतु ॥ ३० ॥**

स्वीये = आत्मीये हृदये, स्वीयेन रसेन = स्वसत्ताभिनन्दनात्मनाऽऽनन्देन परितः पुष्टाः = स्वात्मानन्दनिर्भराः, स्वस्य = परिमितप्रमातृभावस्य देहबुद्धिप्राण-शून्येष्वेवाहमित्यभिमानस्य, विलये = परमशिवे विलये सति, अथवा सु-अवि-लये इति=सुष्ठु अवीनां उपलक्षणमेतत् पशूनां सर्वेषां, तेन अवीनां = पशूनां जीवानां लये सति, स्वात्मसात्कारे सति सर्वेषामपि सप्तकक्ष्याभाजां प्रमातृवर्गाणाम्, अथवा सु-अ-विलये सति, सुष्ठु न विलये सति, स्वात्मनः सर्वथा विलये असति अपि तु केवलं देहप्राणाद्यहम्भावस्यैव परिपूर्णे शुद्धे प्रकाशविमर्शसमरसाकारमात्रे परमशिवे विलये जाते, तस्य पुनर्विलयभित्तिभूतस्याधिष्ठानरूपस्य शुद्धप्रकाशविमर्शसमरसा-कारस्य परमशिवात्मनः स्वस्वरूपस्य विलये असति, अथवा देहप्राणादेश्चितौ लये जाते, परं सर्वथाऽभेददशायामनासादितायां भेदाभेददशायामेव प्राप्तायां सत्यां किंचा-नासादितायामशरीरमुक्तौ जीवन्मुक्तिदशायामेवाप्तायां सत्यां, स्वस्य रूपं, पारमा-र्थिकं तत्त्वं सङ्केतनिरपेक्षं परावाक्प्रकाश्यं, निखिलवाच्यव्यङ्ग्याद्यापेक्षिकार्थभित्ति-भूतत्वान्महान्तम्=अपरिमितं=अनवच्छिन्नम्, अर्थं=अपरिमिताहंरूपम्, समं सुप-रिपूर्णम्, स्वाच्छन्द्यं=स्वातन्त्र्यम्, अपरिमिताहंप्रकाशविमर्शोल्लासरूपम्, अनुभवन्तः स्वसंवेदनप्रमाणेन संविदन्तः पूर्णा अर्था येषां ते, कृतकृत्याः, प्रत्यभिज्ञातस्वात्मशिव-भाववशाच्चरितार्थतां प्राप्ताः, ये कामकलया सह अपरिमितया निजया पराशक्त्या सह सदा स्वाधीनं=स्वस्यैवाधीनं परमुखप्रेक्षिताशून्यं यत् स्वस्यैव ललनं विलसनं तदेव कला=क्रीडात्मिका क्रिया येषां ते, किंच महासन्ध्याः= महती सन्ध्या येषां ते, सन्ध्या हि सन्धिः। सा चेह मध्यत्रुटिः, विकल्पद्वयान्तराले दीव्यन्ती सर्वस्यापि स्वप्रकाशा महापुरुषाणां कृतेऽसौ स्पन्दरूपिणी मध्यत्रुटिरेव विशालतां याति। ते हि तदन्तरेव प्रकाशमानं भावजातं संविदन्तो महासन्ध्यारसिकतां लभन्ते। ते ईदृशा महापुरुषा एव वन्ध्यासुतकल्पस्य = मायीयत्वेनैव भासमानस्येन्द्रजा-लस्येवास्य विश्वस्य परिणयं=विवाहं कल्पनामात्रोल्लासितजगन्नाटकाभिनयक्रीडां विदधतु=कुर्वन्तु नान्ये कदाप्येवं कर्तुं समर्थाः। ते हि प्रपञ्चकल्पनासारत्वेन पश्यन्तः नाटकाभिनयमिव कर्तुमलम्। अन्ये पुनः प्रपञ्चं सत्यं मन्वानाः क्लिश्यन्त एव नाम सांसारिकैः क्लेशैः। अथवा प्रत्यभिज्ञातस्वात्ममहेश्वरभावा महापुरुषा एव कामकलया = ऐश्वर्यरूपया शक्त्या हेतुभूतया वन्ध्यासुतकल्पस्य जगतः परिणयं= तस्योल्लासनक्रीडां विदधतु=कुर्वन्त्विति। एवंविधानां सिद्धयोगिनां परमेश्वरतांश-लाभेनैवमभिनवसृष्टिसंहारादिप्रकल्पनमुपपद्यते नान्येषां केषामपीति भावः ॥ ३० ॥

अथानेन पारमेश्वर्याः लीलाया विषये किमपि वैचित्र्यं प्रस्तूयते-

**नराः सन्तो दुःखं सुखमथ लभन्ते खलजनाः**
**कृतघ्नाः सम्मानं सततमवमानं कृतकृतः ।**
**खलोल्लासो यस्यां भवति परिपुष्टः प्रतिपलं**
**तवैषाऽनिर्वाच्या परमशिवलीला विलसति ॥ ३१ ॥**

हे परमशिव ! शुद्धप्रकाशविमर्शसमरसाकार, शुद्धसंविद्रूप, परमेश्वर ! एषा सर्वैरनुभूयमाना, अनिर्वाच्या=निर्वक्तुं अशक्या, तव लीला=विलासरुचिः विलसति=शोभते, यस्यां लीलायां प्रायशः सन्तो नराः सज्जनाः दुःखं लभन्ते, अथ खलजनाः=दुष्टजनाः पुनः सुखं लभन्ते । पुनश्च कृतघ्नाः सम्मानमादर-सत्कारं लभन्ते, कृतकृतः=कृतकर्तारश्च जनाः सततं अवमानं=तिरस्कारं लभन्ते किञ्च यस्यां लीलायां खलानां=दुष्टजनानां उल्लासः=हर्षनिर्भरता प्रतिपलं=प्रतिक्षणं परितः पुष्टः भवति । एवंविधस्यानौचित्यस्यावभासनं परमेश्वरस्यैव लीलाया विलसितम् । सा च पारमेश्वरी लीला परिपूर्णा स्वतन्त्रा च । यथेच्छति तथैव स्वानन्दनिर्भरा सती विलसति । अनुग्रहलीलानाटनेऽप्यसावानन्द एव, प्रमाद्यन्ती निग्रहलीलाविलासेऽप्यानन्दनिर्भरैव सती क्रीडति । अतः खल्वेव साऽत्यन्तमाश्चर्यकारिणी न च कस्यापि कृते निर्वाच्याऽवाङ्मनसगोचरत्वात्तस्याः । तत एव सन्तस्तस्या वैचित्र्यं ध्यायं ध्यायं मोदमानास्तिष्ठन्ति । हर्षनिर्भरत्वेन च तस्या माहात्म्यं कवयन्तोऽपि दृश्यन्ते ॥ ३१ ॥

अथानेन सांसारिकपशुजनविषये किमपि वर्ण्यते –

**अहो स्वात्मन् ! नित्ये सुहृदि परिपूर्णे त्वयि सति**
**प्रभो ! विश्वैश्वर्याञ्चितवपुषि कामं निरुपमे ।**
**उदारे पुत्रस्त्रीधनधरणिधामादिसुखदं**
**त्वदन्यं दातारं कमपि मृगयन्तेऽतिकृपणाः ॥ ३२ ॥**

अहो=आश्चर्ये, स्वात्मन्=संविद्रूपस्वात्मदेव ! प्रभो=सर्वशक्तिमन् ! विश्वं =सकलं यदैश्वर्यं=कर्तुमकर्तुमन्यथाकर्तुं वा सामर्थ्यं तेन अञ्चितं मण्डितं वपुः शरीरं

यस्य तस्मिन् त्वयि ईदृशे सति, किञ्च कामम् अत्यर्थं निरुपमे=उपमारहिते त्वयि विद्यमाने, किञ्च नित्ये=विनाशरहिते, परितः पूर्णे सुहृदि=मित्रभावयुक्ते उदारे अपरिमिते त्वयि, सति=विद्यमाने सत्यपि सर्वस्यात्मभूते, कृपणाः=अज्ञानहताः करुणास्पदभूताः पशुजनाः, पुत्रश्च स्त्री च धनं च धराणिः=पृथ्वी च, धाम=भवनं चेत्येतान्यार्द्रानि येषां तैर्विषयैः कृतं यत् सुखं तद्ददातीति तथोक्तं कमपि क्षुद्र-मिन्द्रोपेन्द्रादिं देवं वा सामन्तनृपसम्राट्प्रभृतिं वा दातारं कमपि मृगयन्त इत्याश्चर्यमेतत् । सति स्वात्मदेवे सर्वदे मूर्खादन्यः कः धनधराणिधामादिदमन्यमुपासीतेत्यहो मूर्खत्वं जनानाम् ॥ ३२ ॥

अथानेन दुष्टानां चरितस्य विषये किमप्युपवर्ण्यते —

अकल्याणी वाणी मतिरतिचला वृत्तिरसती
विगीतप्रायैव प्रकृतिकुटिलत्वं परिचितिः ।
निसर्गाच्चातुर्यं निरुपममहो साधुहनने
चरित्रं दुष्टानां किमु किमु न लोकं व्यथयति ॥३३॥

दुष्टानां=दुर्जनानां वाणी तावदकल्याणी=न कल्याणी, अशुभा सकलजनोद्वेगकारिणी तेषां मतिः=बुद्धिः अतिचला=चञ्चला, अस्थिरा, अत एवाविश्वसनीया, तेषां वृत्तिः=जीवननिर्वाहोपायभूतं वर्तनं मनसो वा प्रवृत्तिः, असती=न सती अशोभना तेषां परिचितिः=परिचयः विगीतप्राया=निन्दितप्राया=प्रायेण निन्दिता एव, निन्दितैरेव जनैः साकं तेषां परिचयो न साधुभिः, तेषां परिचयेन वा मानवस्य हानिरेव पतनमेव जायते न लाभो नाप्युन्नतिरित्यतोऽतीवनिन्दार्हैव तेषां परिचितिः, किञ्च तेषां प्रकृत्या=स्वभावेनैव नैसर्गिकं कुटिलत्वं, साधुहनने=सज्जनवधे च यत्तेषां चातुर्यं=पटुत्वं तदुभयं निरुपमम्=लोके उपमारहितम् इत्यतो दुष्टानां चरित्रं लोकं संसारं किमु किमु न व्यथयति बहुप्रकारं सातिशयं व्यथयत्येवेति व्यज्यते । नेत्यत्र काकुः ॥३३॥

अथानेन दुष्टैः कलियुगीनैर्वञ्चनाचतुरैः शासकैः शास्यमानस्य देशस्य का गतिर्भवतीति वर्ण्यते मनाक्—

विजानानैर्नानाविधगतिफलां वञ्चनकलां
प्रवञ्च्यन्ते लोका वरमधिगतैः शासकपदम् ।
सुधासिक्तैर्नित्यं ललितवचनैर्यत्र विषयः
स कुम्भीपाकः स्याद्विबुधमतिनिश्चप्रचमिदम् ॥ ३४ ॥

यत्र देशे नानाविधे = बहुप्रकारे, गतिश्च फलञ्चेति गतिफले यस्यास्तां, नानाप्रकारगत्या प्रवर्तमानां नानाविधफलप्रसवित्रीं च वञ्चनस्य = प्रतारणस्य कलां = पटिमानं, विजानानैः = विशेषेण सम्यग् जानानैः विद्वद्भिः, वरम्= उत्कृष्टं शासकपदम्=सचिवमहासाचिवादिपदम्, अधिगतैः = प्राप्तैर्दुष्टजनैः कर्तृभूतैः सुधया=अमृतेन सिक्तैरार्द्रीकृतैः =आपाततोऽमृतवन्मधुरैः, ललितैः = मनोहरैः, वचनैः=शब्दैः करणभूतैर्यत्र विषये, देशे लोकाः = प्रजाजनाः नित्यं=अनवरतं प्रकर्षेण वञ्च्यन्ते=प्रतार्यन्ते, स विषयः=देशः, कुम्भीपाकः =तद्देशवासिभ्यः कुम्भीपाकनरकवत् कष्टप्रदः कुम्भीपाके हि जीवाः पच्यन्ते न च म्रियन्ते । इत्थं दुःशासनाभिभूते राष्ट्रेऽपि प्रजाः सततं क्लेशैः क्लिश्यमाना जीवन्त्येव । एवं जीवनं हि मृत्योरप्यपेक्षया कष्टतरं, स्यादिति यत् सम्भाव्यते तद् विबुधमतिभिः देवानां बुद्धिभिः = दैवीसम्पद्युक्तसाधुजनबुद्धिभिः, एतत्पक्षे विबुधानां मतिरिव मतिर्येषामितिमध्यमपदलोपी बहुव्रीहिः, निश्चितं च प्रचितं चेति निश्चप्रचं साधुजनानामत्र विषये निश्चयः । अनेन पद्येन मनुमान्धातृदिलीपपरशुरामयुधिष्ठिरादिभिः सच्छासकैः शासितपूर्वायां भारतभूमौ साम्प्रतं प्रवर्तमानं कलिकालीनदुष्टजनशासनं अधिकृत्य किमपि ध्वन्यते ।। ३४ ।।

अथानेनाहिंसाविषये वर्तमानकालिकस्य महामन्त्रिणो दुर्नीतिमधिकृत्य किमपि कथ्यते —

**स्वमत्या गोहत्यां सततमनुमत्यापि यतते**
**महामन्त्री यत्र प्रतिदिनमहिंसां प्रथयितुम् ।**
**अनीत्युद्ध्वस्तो नो निधनमनुयायात् स विषयो**
**द्विषल्लक्ष्मीं धन्यो न खलु दिदरिद्रासति परम् ।।३५।।**

यत्र देशे महामन्त्री=प्रधानमन्त्री, गवां=धेनूनां हत्यां=मारणं, स्वमत्या= स्वबुद्धया अनुमत्य=स्वीकृत्य अपि गोहत्यापातकेन हृदये किमपि कष्टमिवाननुभूय, तन्निवारणविषये कमपि यत्नलेशमकृत्वा च वाचा किमप्यनुक्त्वाप्येतैर्लक्षणैरभिव्यज्यमानेन हृदयेन मौनमेवानुमत्य एव प्रतिदिनमहिंसां प्रथयितुं=प्रचारयितुं, वाचा यतते = यतमान एवास्ति, स विषयो = देशः अनीत्या न नीतिः = अनीतिः,

असन्नीतिरिति, तया उद्ध्वस्तः=नाशितः सन् निधनं=विनाशं, नो अनुयायाद्=गच्छेद्=गच्छेदेवेति काक्वा व्यज्यते। सन्नीतिरेव राष्ट्रकल्याणकारिणी। यत्र राष्ट्रे महामन्त्र्येवासन्नीतिमाश्रयमाणो वर्तते तस्य राष्ट्रस्य विनाशोऽवश्यम्भावीत्यतोऽस्मद्देशीयेन महामन्त्रिणाऽसन्नीतिं परित्यज्य सन्नीतिराश्रयणीयेति भावः। अयं विषयोऽर्थान्तरन्यासेन समर्थ्यते लक्ष्मीं=विभूतिं द्विषन्=तस्यां द्वेषं कुर्वन् धन्यो जनः=अधन्य इति ध्वनिः, न खलु परमत्यर्थं दिदरिद्रासति=अत्यन्तं दरिद्रीभवितुमिच्छति, दरिद्रातेः सन्नन्तमिदं पदम्, दिदरिद्रासत्येवेति काक्वा व्यज्यते। यथा लक्ष्मीं प्रति द्वेषवाञ्जनः दरिद्रो भवितुमेव वस्तुत ईहते तथैवानीतिहतं राष्ट्रं तदनीतिरतेन महामन्त्रिणा विनाश्यत एवेति सम्भाव्यते ॥३५॥

अथानेन वर्तमानकालिकस्य राष्ट्रनायकस्य विषये किमप्युच्यते –

सुरम्या हर्म्याली ननु विविधभोज्यावलिरियं
गणोऽयं पेयानामपि च युवतीनां ततिरियम्।
अनन्ताधीशैस्तत् किमसुरगणैर्नाभिरमितं
यदासादाद्धन्यं स्वमयमधिनेताभिमनुते ॥ ३६ ॥

यदासादाद्=यस्य हर्म्यादिविषयजातस्य योग्यपदार्थस्य आसादाद्=आसादनात्, प्राप्तेः। अयं=सर्वैर्दृश्यमानोऽधिनेता=अधिनायकः, सर्वस्यापि राष्ट्रस्य=मुख्यो नायकः। स्वम्=आत्मानं धन्यं=कृतकृत्यम्, अभिमनुते=कृतकृत्यताभिमानमात्मन्यनुभवति। तद्=हर्म्यादिविषयजातं, किम् असुराणां गणैः=असुरगणतुल्यैः, अनन्तैः प्राक्तनैरर्वाक्तनैरिदानीन्तनैश्चासंख्यैरधीशैः = भूस्वामित्वाभिमानिभी राजभिर्नाभिरमितं? अपि त्वभिरमितमेव। यथा हि दानवप्रकृतयो राजानः हर्म्यादिविषयभोगेनात्मानं धन्यं मन्यन्ते स्म मन्यन्ते च देशान्तरेषु, तथैवायं प्रजातन्त्रकर्णधारोऽस्माकमधिनेतापि कुरुत इत्यसाम्प्रतम्। भवितव्यं चानेन वशिष्ठयौगन्धरायणचाणक्यादितुल्येन तापसवृत्तिनार्यजुष्टपथगामिना भारतनायकेन। यदसुरगणैरभिरमितं तत्रानेन रुचिर्न विधेया। तच्च सुरम्या=सुन्दरी रमणीया, हर्म्याणां प्रासादानामाली श्रेणिः, विविधानां च मांसादीनां भोज्यानामावलिः=विस्तारः पेयानां=मदिरादीनां चायं तद्गेहे दृश्यमानो गणः=समूहः, अपि चेयं युवतीनां ततिः=श्रेणिः। एते हि विषया अधिनायकस्य प्रियाः असुरगणानां चापि प्रिया इत्यासुरमार्गगामित्वमस्य न

देवमार्गगामित्वम् । किञ्चासुरगणोच्छिष्टं भोज्यपेयस्पृश्यादिविषयजातमासादयतोऽस्य महामन्त्रिणः स्वात्मनि धन्यत्वाभिमान आश्चर्यकारी सहृदयानां कृते ॥ ३६ ॥

अथानेन पद्येन वर्षाकालोद्भूतायाः नद्याः वर्णनमिषेण कतिपयदिनोत्पन्नायाः आधुनिक्याः शासनपद्धतेः कियन्मात्रं माहात्म्यमिति व्यञ्जनावृत्त्या प्रतिपाद्यते-

**इयं वर्षोत्पन्ना कतिपयदिनाह्लादनकरी**
**वहन्ती सम्भारं सरणिरजसां कर्दमपुषाम् ।**
**नदी विद्याद्वार्त्तां नररमणमुक्तोद्गमवतीं**
**कथं प्राप्या मुक्ता जलनिधिमगाधं बत विना ॥ ३७॥**

इयं=पुरोदृश्यमाना, वर्षोत्पन्ना=वर्षा=वृष्टिस्तत उत्पन्ना वर्षाकालोद्भवाऽस्थायिनी अत एव कतिपयदिनानि यावदेव किमप्याह्लादनं करोतीति तथाविधा, न तु सर्वदा स्नानपानादिकारित्वेनाह्लादयित्री घर्मतृषार्तानां जनानाम्, किञ्च कर्दमं=पङ्कं पुष्णन्ति=वर्धयन्तीति, तथोक्तानां सरणीनां=मार्गाणां रजसां=पांसूनां सम्भारं वहन्ती, पांसुमिश्रं कलुषं स्नानपानाद्ययोग्यं वर्षाजलं वहन्तीति भावः एवंविधेयं क्षुद्रा नदी, नरान्=श्रेष्ठान् मनुष्यान् रमयन्तीति तथाविधानां मुक्तानां मौक्तिकमणीनामुद्गमवतीम्=उत्पत्तिमतीं वार्तां=कथां, किं विद्यादिति सम्प्रश्ने लिङ् । नैव विद्याद्=जानीयादिति काक्वा व्यज्यते । ताम्रपर्ण्यादयः काश्चन एव नद्यः मुक्ताफलोत्पत्तेः वार्तां जानन्ति न त्वितरा महत्योऽपि स्थायिन्यो नद्यः का पुनर्वार्ता कतिपयदिनानि वहन्त्या वर्षोद्भवायाः क्षुद्रसरितः । वस्तुतस्त्वगाधं=विगाहितुं=विलोडयितुमशक्यमतिगम्भीरं, जलनिधिं=समुद्रं विना मुक्ताः कथं प्राप्याः=नैव प्राप्या इति व्यज्यते । बतेति खेदे, खेदस्यायं विषयो यत्सामान्यनदीषु मुक्ताः न लभ्याः यत्र च लभ्या असौ समुद्रोऽगाधः,न तत्र साधारणजनानां गतिः अन्योक्तिरियम् । व्यञ्जनयाऽत्र नदीत्वेन नदीवदेव प्रवहन्ती वर्तमानकाले प्रचलन्ती शासनपद्धतिः प्रतिपादयितुमिष्टा । असौ शासनपद्धतिस्तु नैव गङ्गादिनदीवत् पुरातनी, न चापि समुद्रवदगाधा । अपि तु कतिपयदिनानि वर्तमानकालसम्बन्धीनि यावदेवाह्लादनकरी, न तु मन्वादिप्रतिपादितपद्धतिवत् सदैव सुचिराह्लादकारिणी । किञ्चेयमाधुनिकी शासनपद्धतिः पाश्चात्येभ्यो विदेशेभ्योऽत्र सम्प्राप्ता । अत एव मार्गरजसां=तत्तद्देशेषु वर्तमानानां नीतिदोषाणां सम्भारमपि वहत्येव । ततः कलुषेयं

पद्धतिरनार्यजुष्टत्वात्। पुनश्चेयं पद्धतिः नराणां नेतॄणामेव रमणं सुखसाधनं क्रीडासाधनं वा यन्मुक्तं=स्वातन्त्र्यं, भावे क्तः, तस्योद्गमः=उपलब्धिः, सा विद्यतेऽस्यामिति तादृशी या वार्ता=कृषिः पाशुपाल्यं वाणिज्यं चेति त्रयं, विद्याद्=जानीयात् । अनया वैश्यजनप्रियया वार्ताप्रधानया पद्धत्या नेतॄणामेव सुखं क्रीडादि वा सिध्यति न तु साधारणजनानाम् । जनाः दुःखोदधौ निमज्जन्तां परं नेतृभिः सुखं भुज्यतामित्येव हि लक्ष्यमस्याः कलुषायाः शासनप्रणाल्याः । अगाधं=इदानीन्तनैर्विषयोपभोगमात्रपरैर्जनैर्दुर्बोधमार्यजनप्रियं मन्वादिमुनिवरोपदिष्टं सन्नीतिमहोदधिं विना साम्यवादसमाजवादधनिकवादगणतन्त्रवादगान्धीवादप्रभृतिनामिकाभिः कतिपयदिनाह्लादकारिणीभिर्नीतिभिः सकलजनताया धर्मार्थकाममोक्षप्राप्तिरूपाः मुक्ताः । कथं प्राप्तुं शक्याः । नैव प्राप्या इति काकुः । बतेत्याश्चर्येऽपि, खेदेऽपि च । वर्षोत्पन्ना च कतिपयैरेव वर्षैरुत्पन्ना न तु पुरातनी मनुमान्धातृसगरादिसेविता । ततः सकल जनतायाश्चतुर्वर्गफलप्राप्तयेऽवश्यमार्यदेशीयैरार्यवंशीयैश्चास्माभिरार्यजुष्टैव सनातनी नीतिरुपास्येति खलूपदिश्यतेऽनेन पद्येन ॥ ३७ ॥

अथानेन वर्तमानकाले शासकगणैः कृतदुष्प्रयोगाया अहिंसायाः दुर्दशोपवर्ण्यते—

**पुराणानां पातञ्जलबुधवराणां परिचिते !**
**नराणां धीराणां गलितकलुषाणां हृदि तते ! ।**
**जनाधीशादेशान्नरपशुगृहीतेऽतिकरुणा-**
**महिंसे ! कामेतां श्रयसि विवशा सम्प्रति दशाम् ॥३८॥**

पुराणानां=प्राचीनानां, पातञ्जलानां=पतञ्जलेः शास्त्रमनुसरतां योगशास्त्राभ्यासिनां, बुधवराणां=विद्वद्वराणां सुबुद्धिमतां, परिचिते=तैः कृतपरिचये, हे अहिंसे ! किञ्च धीराणां=धैर्यवतां द्वन्द्वसहिष्णूनां तीक्ष्णधीयुक्तानां च, गलितानि=नष्टानि कलुषाणि=पापानि येषां तेषां, नराणां क्लृप्तशक्तीनां पुरुषाणां, हृदि=हृदये जातावेकवचनं, हृदयेष्वित्यर्थः । तते=व्याप्ते तत्र सदा वर्तमाने, हे देवि अहिंसे ! सम्प्रति=इदानीं, जनाधीशस्य=जनानामध्यक्षस्य, जनाधीशानां वा देशनायकानां आदेशात्=आज्ञया जनत्वेन साधारणजीवत्वं पशुत्वमिव प्रजानां ध्वन्यते त्वं नराः पशव इव नरपशवः= पाशवप्रवृत्तियुक्ता मानवास्तैर्गृहीते, अहिंसे ! विवशा सती परवशा सती, कामेतां

अतिकरुणां अतिदुःखबहुलां हृदयविद्रावयित्रीं चक्षुष्मतां दशां=दुर्दशां, श्रयसि=आश्रयसि; अतीवकरुणामवस्थां प्रापितासि त्वम् । पूर्वं योगिभिः सेविताभूदहिंसा येन तेषां सन्निधौ शाश्वतिकवैरभाजोऽपि जीवाः वैरं परित्यजन्तिस्म हिंसाप्रतिष्ठामाहात्म्यात् । परमिदानीन्तना जनाधीशा आततायिकृतं नृशंसत्वं सोढव्यमित्येवंरूपं भीरुत्वमेवाहिंसामिषेण प्रचारयन्ति । धर्मविरुद्धमेतत् । उक्तं च मनुना–

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा तपस्विनम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ इति ॥ मनुस्मृतिः

इत्थं योगाभ्यासपूर्वकमहिंसासेवनं विहायाततायिविषये तत्सेवनमहिंसाया महान् दुरुपयोगः । एतेन दुरुपयोगेनैवेयमतिकरुणामवस्थामिदानीं भजते । अस्याः कृते इदमतीवकरुणम् । यथोक्तं महाकविना पण्डितराजजगन्नाथेन

पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्ववजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥ (भा. वि.) ॥३८॥

अथानेन पूर्वमार्यप्रकृतिभिस्सज्जनैः सेवितायां नीतेरिदानीन्तनैरसुरप्रकृतिप्रधानैर्नेतृजनैः परिक्लिश्यमानत्वे सहृदयजनाः खिद्यन्त एवेति प्रतिपाद्यते–

कवीनां सम्मान्या मनुजमनुसम्भावितपदा
प्रसादादाप्या या सकलसुरवाचामधिपतेः ।
अहो सेयं नीतिः खरदनुजभावं धृतवतां
कराकृष्टा कष्टां कथयति नृणां कामपि कथाम् ॥३९॥

या खलु नीतिः कवीनां=शुक्राचार्यादीनामन्येषां च बुद्धिमतां विदुषां सम्मान्या=तैरादरणीया, साधारण्येन सम्बन्धमात्रविवक्षायामत्र षष्ठी । किञ्चासौ मनुजैः=मनोः सकाशात् साक्षात् परम्परया वोत्पन्नैरिक्ष्वाकुप्रभृतिभिः मनुना चापि सम्भावितौ=महितौ पदौ यस्याः सा । मनुजाश्च मनुश्चेति मनुजमनवः मनुजमनुभिः

सम्भावितपदेति। अपरञ्च सकलानां सर्वेषां सुराणां देवानां वाचामधिपते=वागीशस्य बृहस्पतेः प्रसादादाप्या=प्राप्या या नीतिः सेयमिदानीं खराणां=तीक्ष्णानां क्रूराणां दनुजानां=दानवानां भावं क्रूरदानवत्वं धृतवतां=धारयतां, नृणां आसुरभावदूषितानां नेतॄणां=कराकृष्टा करैर्हस्तैराकृष्टा सती तैः, अत्रापि सामान्यसम्बन्धमात्रविवक्षायां षष्ठी,एवं तैः कराकृष्टा सती कामप्यवर्णनीयां सहृदयजनैः स्वयमेव वेद्यां कष्टां दुःखमयीं करुणां निजां कथां, अहो इति खेदे, खेदस्यायं विषयो यदियमीदृशीं करुणां कथां कथयति। मनुप्रभृतयोऽस्याः पादसेवापरा अभवन् परमिदानीन्तनाः नेतारः अनादरपूर्वकं क्रूरतयेतश्चेतश्च वराकीं करैराकर्षयन्तोऽपि न लज्जन्ते। अनुभूतसुखसम्मानाया अस्या एवं कराकर्षणपूर्वकमनाद्रियमाणत्वं क्लिश्यमानत्वं च कस्य सहृदयस्य हृदयं दुःखेन न द्रावयतीतिभावः ॥३९॥

के नाम महानुभावा ऋषिपदाभिधेया भवितुमर्हन्ति, कथं चेदानीमत्यन्तमयोग्येष्वपि दुर्जनेषु प्रयुज्यते ऋषिपदमित्यनेन प्रतिपाद्यते–

**निदानं धर्माणां किमपि हृदि साक्षात्कृतवतां**
**पुरा कैश्चित् प्राप्यं कठिनतममासीदृषिपदम्।**
**इदानीं किं ब्रूयामहह वृषलानां खलु तति-**
**र्विनैवाऽऽरूढास्ते श्रमकणमृषीणामृषभताम् ॥ ४० ॥**

पुरा=प्राचीनकाले धर्माणां = चातुर्वर्णिकचातुराश्रमिकाणां अभ्युदयनिःश्रेयससाधनभूतानामुपायानां, किमपि=परिपूर्णतया वर्णयितुमशक्यं, स्वसंवेदनं=संवेदनीयं निदानं=आदिकारणं, हृदि=स्वकीये हृदये साक्षात्कृतवतां=स्वसंवेदनप्रमाणेन संविदितवतामपि महापुरुषाणां कृते ऋषिपदं=ऋषित्वपदवी कठिनतममतीव दुष्प्राप्यं आसीत्, कैश्चिदेव च सुसाक्षात्कृतधर्मतत्वैरतिविरलैः सिद्धजनैः प्राप्यमासीत्। पुरा केचन एव सिद्धजना ऋषिपदमलभन्त। यैर्धर्मस्य निदानं साक्षात् कृतं तैरपि ऋषिपदं दुरवापमेवाभूत्। परमिदानीं वृषलानां=पामरजनानां ततिः=सन्ततिः समूहः श्रमस्य=परिश्रमस्य, तपःस्वाध्याययोगाभ्यासादिरूपस्य यत्नस्य कणमपि=लेशमपि विनैव, खलु=निश्चयेन ऋषीणां=ऋषभतां श्रेष्ठतामारूढा आस्ते। योगादियत्नं विनैवेदानीं पामरजना अपि ऋषिपुङ्गवा इति भण्यन्ते। अहह इति

खेदसूचकमव्ययम् । किं ब्रूयामिति गर्भितं वाक्यं महदाश्चर्यद्योतकम् । गर्भितत्वं चेत्थमत्र गुण एव न दोषः । इदानीं हि स्थाने स्थाने बहवो वाक्पटवो वञ्चनाप्रवणाः शास्त्रार्थचौराः स्वभावतश्च दुर्जनाः मानवा ऋषय इति भण्यन्त इति कस्य सहृदयस्य कृते नैतत् खेदावहमाश्चर्यकरं चेति भावः ॥ ४० ॥

भोगैषिणो जनाः कथमपि योगाधिकारिणो न भवितुमर्हन्तीत्यनेन प्रतिपाद्यते

**सुधां मन्वानानां शकृदनुपलं पङ्किलहृदां**
**नृणां भूदाराणां यदि हृदि पदं योगमहिमा ।**
**न दत्ते नो चित्रं द्रविणललनाऽऽलोलितदृशां**
**न भोगभ्रष्टानां भवति विषयोऽसौ हतधियाम् ॥ ४१ ॥**

पङ्किलं = मलिनं = कामक्रोधादिकलुषितं हृद् = हृदयं येषां तेषामत एव अनुपलं प्रतिपलं, प्रतिक्षणं कालमानपक्षे, प्रतिमानपक्षे च प्रतिकर्षचतुष्टयं सदैव पलं पलं शकृत्=पुरीषं. सुधाम्=अमृतं मन्वानानां=मन्यमानानां, भूदाराणां=भुवं =पृथिवीं मुस्तादिप्राप्तये दारयन्ति दशनैः खनन्तीति भूदाराः शूकराः त एव हि स्वभावतः पुरीषममृतमिव मन्यन्ते तदाधुनिका नेतारोऽप्यकल्याणं कल्याणं मन्वाना उपदिशन्तश्च शूकरवदेव चेष्टन्ते । किञ्च भूः=पृथिवी एव दाराः = स्त्री येषां तेषां भूस्वामिनां भूपतीनां वा नृणां पुरुषाणां स्वात्मानं भूपतिं मन्वानानां वा कलिकालिकानां नेतॄणां, तेऽपि भुवं=राष्ट्रं स्वकीयैः कुकृत्यैर्दारयन्त एव दृश्यन्ते । राष्ट्रविभाजननीत्यापि तेषां भूदारत्वं सुस्पष्टमेव । हृदि=हृदये, यदि चेद्, योगस्य= जीवात्मपरमात्मपार्थक्याविलुम्पकस्य कस्यापि रहस्योपायस्य, महिमा=माहात्म्यं, पदं न दत्ते=तेषां हृदि चरणन्यासमपि न करोति=न तत्र कथमपि प्रविशत्यपि, तद् नो नैव चित्रम्=आश्चर्यकरम् । स्वाभाविकमेतदेतेषां कृते यतो हता धियो येषां तेषां=दुर्बुद्धीनाम्, अत एव द्रविणं=सुवर्णं ललना सुन्दरी, ताभ्यां आलोलिताश्चञ्चलीकृताः दृशो=नेत्राणि बुद्धयो वा ज्ञानात्मिका येषां तेषां भोगेभ्यो भ्रष्टानां, भोगलोलुपानां भोगेष्वसन्तुष्यतां यथेच्छं च भोगानलभमानानां, मनुजपशूनामसौ योगाख्यो विषयो न भवति । भोगभ्रष्टा योगे नानुरज्यन्ते, यतो भोगविरक्ता एव योगेऽधिकारिणः तद्यदि भोगभ्रष्टा नेतारः योगमहिमानमादरदृष्ट्येदानीं न पश्यन्तीति नायमाश्चर्यस्य विषयः ॥ ४१ ॥

अथानेन योगिनां भोगिनां च किमपि साम्यवर्णनपुरःसरं भोगिनां स्वभावो विचित्रयोपमयोपवर्ण्यते—

नरो योगभ्रष्टो मुहुरतनुयोगाय यतते
भवं भोगभ्रष्टोऽप्यहह भगभोगाय भजते।
जनः स्पष्टस्वेष्टोऽनुकलितकुचेष्टोऽतिकृपणो
यथा कृष्णः कीटोऽङ्गुलिवृतचपेटो लुठति कौ ॥४२॥

योगाद् भ्रष्टो=योगे पारिपूर्ण्यमप्राप्य विघ्नैर्विघ्नितोऽत एव योगपथात् भ्रष्टो नरः=श्रेष्ठो मानवस्तं योगमार्गमत्यजन्, मुहुर्वारं वारं जन्मजन्मान्तरेष्वपि प्राक्तनसंस्कारवशाद् योगाय एव यतते। किञ्च भोगेभ्यो भ्रष्टो जनो मुहुर्मुहुर्जायमानः पशुतुल्यो मानवो भोगलोलुपोऽपि यथेच्छं भोगानप्राप्नुवन् अधिकाधिकविषयभोगवासनावासितत्वाद्, अहह इति खेदे, भगस्य ऐश्वर्यस्य भोगाय, क्षणमात्रसुखाय, पर्यन्ते च विरसाय तुच्छाय, वस्तुने भवं संसारं संसृतिं, जननमरणजरादिरूपं च भवं भजते सेवते। किञ्चासौ भोगभ्रष्टो जनः सततं संसृतिसमुद्रे जायमानतां भजमानो जीवः स्पष्टं=वासनाख्यसंस्कारबलात् स्वं=निजं इष्टं=विषयभोगादि यस्य सः अनुकलिताः=वारंवारमनुष्ठिताः कुचेष्टाः=कुत्सिताः क्रिया येन सः अतिकृपणोऽतिदयनीयः सन् एवं भवं भजते। यथा हि कृष्णः कीटः अङ्गुल्या तेन कीटेन साधनभूतेन क्रीडापरस्य मानवस्याङ्गुल्या साधनभूतया वृता प्रदत्ता चपेटा=अङ्गुलिप्रहारो यस्मै सः किं वा अङ्गुल्या इतिपञ्चमीसमासः। प्रहारकर्तुरङ्गुल्याः सकाशाद् वृता स्वीकृता, चपेटा=प्रहारो येन सः। कौ भूमौ लुठति। असौ कीटो हि मानवाङ्गुलिचपेटया वारं वारं दूरं भूमौ प्रक्षिप्यमाणोऽपि पुनः पुनस्तं प्रक्षेपकं मानवमेवोपसर्पति। एवं पुनः पुनश्चपेटापातनमनुभवन् भूमौ लुठति कृष्णकीटवदेव, भोगभ्रष्टो जनो भोगैर्वारंवारं कदर्थ्यमानोऽपि पुनः पुनस्तदर्थमेव संसरति ॥४२॥

इदानीं भारताभिजना अपि राष्ट्रनेतारो निजमुद्घोषितचरं राष्ट्रपालितत्वं राष्ट्रसेवकत्वं राष्ट्रपुत्रत्वं च विस्मृत्य राष्ट्रपतित्वमात्मनः ख्यापयन्तीत्येतां महतीं दुर्नीतिमधिकृत्यानेन खेदः प्रकटीक्रियते—

अजस्रं स्वं राष्ट्रं जगति जननीतिप्रथयता-
महो लोका! लीलां वृतकलिकलानां कलयत।
स्वराष्ट्रस्येदानीं स्वमपि पतिभावं गमयतां
प्रतिष्ठा हाऽऽर्याणामपि हृदि यदुन्मेषमयते ॥ ४३ ॥

हे लोकाः=जनाः, स्वं राष्ट्रं=भारतवर्षं जगति=संसारे जननीति=मातेति=भारतमातेति, अजस्रं सततमेव प्रथयतां=“वन्दे मातरम्” इत्यादिभी राष्ट्रियगीतिकाभिः प्रख्यापयतां, परं वृता=स्वीकृता कलेः वर्तमानयुगाधिदैवतस्य कला=दम्भस्वार्थवञ्चनादिनिपुणता यैस्तेषां लीलां=कलिकलोचितां प्रतारणाक्रीडां कलयत=सम्यगवबोधत। हा!! कष्टम्!! यदिदानीमार्याणां आर्याभिजनानां भारतीयानामपि हृदि=हृदये, स्वराष्ट्रस्य जननीत्वेन प्रख्यापिताया भारतभुवः स्वमपि=स्वात्मानमपि पतिभावं=पतित्वं गमयतां=प्रकटयतां, आत्मानं राष्ट्रपतिं मन्यमानानां राष्ट्रनेतृणां कृते प्रतिष्ठा=आदरभावः उन्मेषम्=उदयम्, अयते=गच्छति। अस्मन्नेतारो हि भारतभुवं भारतमातेति प्रख्यापयन्ति। प्रधानश्च नेता स्वात्मानं राष्ट्रपतिनाम्ना प्रख्यापयति। इतरे चापि नेतारस्तस्येदमभिधानं श्रावं श्रावं, वाचं वाचं चापि परितुष्यन्ति। देशवासिनश्च सज्जना एतान् स्वजननीपतीनपि सम्मानदृष्ट्या पश्यन्तीत्यनर्थपरम्परेयं सहृदयजनोद्वेगकारिणी। ननु पातिशब्दः पाति=पालयतीति व्युत्पत्त्या पालकार्थकः सन् राष्ट्रसेवकत्वं व्यनक्ति राष्ट्रपतेरिति चेन्न, अस्तु नाम व्युत्पत्त्या पतिशब्दः पालकार्थः। परमसौ चिराद्भोक्तरि रूढः सन् राष्ट्रभोक्तृत्वमेवाभिधत्ते। रूढिश्च योगाद्बलीयसी। तदत्यन्तमनुचितमिदं यद्राष्ट्रसेवकानां प्रधानो राष्ट्रपतिरित्यभिधीयते निःशङ्कम् ॥४३॥

अथैताभ्यां भारतसंसदमाधिकृत्य किमप्याक्षिप्यते—

**युवानो वृद्धा वा सदसि विदधानाः प्रतिदिनं**
**जनाऽऽशंसां मत्वा तृणमिव नवान्नीतिनियमान्।**
**अशक्तान् पिंषन्तोऽप्यवनमवनेर्जानत इमे**
**बुभुक्षाऽऽश्लिष्टानां मतिरविनयानेव सृजति ॥ ४४ ॥**

संसदि युवानो वृद्धा वा सर्वेऽपि सभ्या जनानां=प्रजानाम्, आशंसां = समीहां तृणमिव=तुच्छां मत्वा प्रतिदिनं सदसि=संसदि, नवान् जनक्लेशकारिणो नीतयश्च नियमाश्चेति तान्नीतिनियमान्, नीतेर्वा नियमान्, स्वकीयानार्यजुष्टनीत्यनुकूलान् नियमान् विदधानाः=संसदि बहुमतैः निश्चिन्वन्तः सन्तोऽशक्तान्=निर्बलान्, पिंषन्तस्तेष्वत्यन्तमन्यायं कुर्वन्तस्तांश्च कष्टात्कष्टतरां दशां प्रापयन्तोऽप्यवनेर्भूमे

राष्ट्रस्यावनं रक्षणमिमे सभ्या जानते। प्रजाः पीडयन्तोऽप्यात्मनः राष्ट्ररक्षकान् राष्ट्रपोषकाँश्च प्रख्यापयन्ति। वस्तुतः सभ्यास्तु त एव वृद्धा इति सम्मन्यन्ते, ये सदसि धर्मं वदन्ति। "न ते वृद्धा ये न वदन्ति धर्मम्" इति हि महाभारतवाक्यम् तदमी संसदः वृद्धाः सभ्याः केवलं वयोवृद्धा एव मन्तव्या न धर्मवृद्धाः। अयमर्थोऽर्थान्तरन्यासेन समर्थ्यते बुभुक्षेत्यादिना। बुभुक्षा भोक्तुमिच्छा, तयाऽऽश्लिष्टानां युक्तानां जनानां, मतिर्बुद्धिरविनयानेव अनीतीरेव, सृजति नान्यत्। तथाचोक्तं

**बुभुक्षितः किं न करोति पापं क्षीणा जना निष्करुणा भवन्ति। इति**

अस्मत्संसत्सभ्या अपि वित्ततृष्णारूपयाऽधिकारतृष्णारूपया च बुभुक्षया युक्तासन्तस्तादृशानेव नीतिनियमान् निश्चिन्वन्ति यैर्दरिद्राः प्रजा अहरहः, अधिकमधिकं पिष्टा भवन्ति ॥४४॥

**उपादाय भ्रष्टैरपि बृहदुपायैर्जनमता-**
**न्यलम्माना: सभ्याः सदसि समिता राष्ट्रभरणे।**
**दुरन्तैरुत्कोचैर्निशि निशि भरन्तो निजगृहान्**
**जनानां कल्याणान्यहह कवयन्ते दिशि दिशि ॥ ४५ ॥**

इमेऽस्मत्संसदः, सभ्याः भ्रष्टैरपि कूटनीतियुक्तत्वाच्छलबलादिसमन्वितत्वाच्चातिदूषितैरपि बृहद्भिर्महद्भिरुपायैश्छलबलादिबहुरूपैः जनानां मतानि=मतपत्राण्युपादाय गृहीत्वा, तद्बलेन सभ्यत्वमवाप्यात्मानं अलं समर्थं मन्यन्त इति तथोक्ताः सन्तः सदसि=संसदि राष्ट्रस्य भरणे=पोषणे=तन्निमित्तमिति निमित्तसप्तमीयं, समिताः=एकत्रीभूताः सन्तो=दुरन्तैः दुष्टः प्रजापीडापरत्वादन्तः परिणामो येषामीदृशैरुत्कोचैः 'रिश्वत' इति ख्यातैरुत्कोचद्रव्यैर्निशि निशि=रात्रौ रात्रौ दिन इतरे जना अपि कदाचिज्जानीयुरित्याशङ्कया रात्रौ रात्रौ निजान् गृहान् गेहानि, गृहशब्दो नित्यबहुवचनः पुंसि, ततो गृहानिति साधुः शब्दः। भरन्तः=द्रव्यजातेन पूरयन्तः जनानां चिन्तां विहाय स्वार्थपरत्वेन निजगृहाण्येव पूरयन्तः सन्तो, जनानां=प्रजानां कल्याणानि, अहह इति खेदे। खेदस्यायं विषयो यत् स्वार्थपरा अपि सभ्याः प्रजाकल्याणानि दिशि दिशि कवयन्ते=केवलं वाक्चातुर्येण तद्विषये भाषणादिसमाचारपत्रप्रकाशनाद्याकाशवाणीघोषणादि च मिथ्यैव

कुर्वन्त्यविश्रान्तम् । यया खलु कविः स्वयमेव स्वं काव्यमयं जगन्निरुपादानमेव कल्पयति तथैवैते सभ्याः प्रजाकल्याणं वयं कुर्म इति कल्पनामात्रमेव मिथ्यैव प्रख्यापयान्ति सर्वत्रेत्यतीव खेदस्य विषयोयम् ॥ ४५ ॥

अथानेन साधारणतया भारतनेतॄणां दुर्नीतिमधिकृत्य किमप्याक्षिप्य तस्या दुष्परिणामविषये जनाः सञ्चेत्यन्ते—

**चरन्तः स्वच्छन्दं जनधनमिमे नेतृचरणाः**
**स्वराष्ट्रं सेवाभिः सपदि सुखयामो वयमिति ।**
**बिडालानां वृत्तिं बुधजनविगीतां कपटिनां**
**श्रयन्ते चेद्राष्ट्रं प्रलयगिलितं हन्त सकलम् ॥ ४६ ॥**

इमे विविधदलभाजो नेतृचरणाः=नेतृमहोदयाः, चरणशब्दोऽत्र लक्षणयादरणीयनेतृजनार्थे प्रयुक्तो व्याजस्तुत्या नेतॄणां दुष्टत्वं व्यनक्ति, वयं स्वं राष्ट्रं भारतं स्वकृताभिः सेवाभिः सपदि=शीघ्रमेव सुखयामः=सुखिनं सम्पादयाम इति प्रतिजानन्तः सन्तः स्वच्छन्दं स्वैरं=निःशङ्कं जनानां=प्रजानां धनं कूटनीत्या चरन्तो=भक्षयन्तः, चर गतिभक्षणयोः, ईदृशाः सन्तो बुधजनैः=बुद्धिमद्भिर्महापुरुषैर्विगीतां=निन्दितां कपटिनां=छलिनां बिडालानां मार्जाराणां वृत्तिं=वर्तनं, तेषां चरितमिव चेच्छयन्ते=आश्रयन्ते, तदा सकलं=सर्वं राष्ट्रं प्रलयेन सर्वनाशेन हन्तेति खेदे गिलितं=निर्गीर्णम् । बैडाली च वृत्तिर्मनुस्मृतौ सप्रपञ्चं निर्णीतास्ति,बिडालो ह्यापाततः सौम्य इव दुर्बल इव दीन इव च स्वात्मानं प्रदर्शयन् मौनं तिष्ठति, सकरुणं वा वाशति । परं यदैव मूषकं पक्षिणं वा कमपि पश्यति तदैव सहसा सिंहवद् पराक्रमेण तमाक्रम्य नखमुखप्रहारैः पञ्चत्वं नीत्वा मुखेनादाय दूरं च गत्वा सुगुप्तं खादति । एवंविधैव वृत्तिरस्मद्देशस्याधुनिकानां नेतॄणाम् । अतीवाहितकारिणीयं नीतिरित्यत्र राष्ट्रियैः सावधानैर्भवितव्यम् ॥ ४६ ॥

अथ द्वाभ्यां वर्तमान देशसेवकानां कैतवं किमपि प्रकटीक्रियते —

**इमे शिक्षां दीक्षां विशदतनुलोकैककलिता—**
**मपूर्वां सम्प्राप्ता वरगुरुगिरो गौरगुरवः ।**
**पटैः श्वेतैः श्यामां तनुमनिशमावृत्य शमहो**
**स्वराष्ट्रस्येदानीं किमपि कलयन्ते परभृताः ॥ ४७ ॥**

इमे श्वेताम्बरा जना, विशदाः=गौरवर्णाः तनवो येषां ते विशदतनवो गौरवर्णशरीरा आंग्लप्रभृतयः पाश्चात्त्याः, ते च ते लोकास्तैरेव केवलं कलितां= सम्पादितां, शिक्षां=अक्षरादिबोधाद्विविधवाङ्मयविषयावबोधपर्यन्तं सर्वां विद्याभ्यासमपत्तिं, दीक्षां चाचारविचारादिसंस्कृतिम्, अपूर्वामतिविचित्रां, अप्राच्यां च, पाश्चात्त्यामेव, सम्प्राप्ताः, पाश्चात्त्येभ्य एव लब्धविद्या लब्धोपदेशाश्च, भारतीयसंस्कृतिसंस्कारशून्याः, किञ्च वरगुरुगिरः=गुरूणां गीः=गुरुगीः, वरा=श्रेष्ठत्वेनाभिमता गुरूणां श्वेतजनानां गीर्येषां ते, श्रेष्ठा गुरुगीर्येभ्य इति चतुर्थीसमासो वा, एतेषां कृते हि वेदादिभ्योऽपि आंग्लगुरुवाण्येव श्रेष्ठा, गौराः = आँग्लादयो गुरवो येषां ते गौरगुरवः ईदृशा एते भारतमातृसेवकम्मन्याः श्वेतैर्देशीयकुविन्दानिर्मितैः, खादीति प्रसिद्धैः कार्पासपटैः, श्यामां स्वभावतः कृष्णवर्णां तनुं=शरीरम्, अनिशं=सदैव आवृत्य आच्छाद्य, श्वेतानि 'खादी' वस्त्राणि परिधाय, अनेन मानासिकस्य कौटिल्यस्य सौम्यवेषभाषादिना गोपनेन दम्भोऽपि व्यज्यते श्वेताम्बराणामेतेषाम्। तदेवंभूताः देशसेवकम्मन्याजनाः एवंप्रकारंदम्भाचरणं कृत्वा इदानीं स्वराष्ट्रस्य पितृपुण्यभूरूपस्य भारतवर्षस्य किमपि शं=कल्याणमहो कलयन्ते = कुर्वन्ति। राष्ट्रस्य कल्याणं वयं कुर्म इति केवलं ख्यापयन्त्येव, न च किमपि वास्तविकमस्य कल्याणं कुर्वन्ति, कर्तुं वा शक्नुवन्तीति किमपीत्यनेन, अहो इत्यनेन च व्यज्यते। किञ्च भारतीयसंस्कारहीनत्वात् पाश्चात्त्यदीक्षादिदीक्षितत्वात् गौरगुरुत्वाच्च भारतस्य किं कल्याणमेते कुर्युरित्यपि व्यज्यते। किञ्च परभृताः=परैः पाश्चात्त्यैः भृताः। परभृताश्च कोकिलाः। कोकिलाः केवलं कूजितेनैव रञ्जयन्ति जनान्, एतेऽपि वागाडम्बरमात्रेणात्मानं राष्ट्रसेवकं प्रथयन्तो दृश्यन्ते ॥ ४७ ॥

**नयन्तः प्रख्यातिं विविधमवदानं क्षितितले**
**स्वकीयानां दोषैश्चितमपि गुणैर्मण्डितमिव।**
**नरा वेषैः श्वेता असिततनुचित्ताः पुनरिमे**
**स्वराष्ट्रं धर्षन्तो निजविजयमुम्भान्ति कमहो ॥ ४८ ॥**

स्वकीयानामात्मीयानां=निजसम्बन्धिनां, निजदलभाजां च देशसेवकम्मन्यानां जनानां दोषैः = दम्भस्वार्थवञ्चनादिरूपैर्दूषणैश्चितम् = आचितम्, दोषबहुलमपि विविधं बहुप्रकारकं, नैतिकार्थिकप्राबन्धिकादिभिः प्रकारैर्बहुविधम्, अवदानं=

वृत्तं कर्म वा, गुणैरौदार्यपरोपकारदेशभक्त्यादिरूपैर्मण्डितमिव=अलङ्कृतामिव क्षितितले=पृथिव्यां, सर्वत्र संसारे, प्रख्यातिं=प्रसिद्धिं नयन्तः=अस्मदीया दलभाज एव विविधं जनोपकारकं देशसेवारूपं कर्म समनुतिष्ठन्तीत्येवं समन्ततः प्रख्यातिं समाचारपत्राकाशवाणीभाषणलेखनाद्युपायजातैः कुर्वन्तः, असितानि कृष्णानि तनुचित्तानि येषां ते, तनवश्च=शरीराणि च, चित्तानि चेति तनुचित्तानि, एतेषां शरीराणि कृष्णवर्णानि, चेतांस्यप्येतेषां कृष्णानि तमोगुणोद्रेकयुक्तानि दुष्टानीति तात्पर्यं, ईदृशा इमे नराः=श्वेताम्बरा नेतारः, श्वेतैः=धवलैर्वेषैः खादीवस्त्रैर्युक्ताः-शारीरस्य मानसस्य च कार्ष्ण्यस्य धवलैः पटैराच्छादनं कुर्वन्त इमे नेतारः, स्वराष्ट्रं, भारतवर्षं धर्षन्तः पिंषन्तः सन्तः, कं नाम निजाविजयं उम्भन्ति=पूरयन्तीत्यहो आश्चर्यं, न कमपीति व्यज्यते काक्वा। राष्ट्रधर्षणेन स्वार्थसिद्धिं साधयन्त एत इदमपि न संविदन्ति यदाधारभूतस्य राष्ट्रस्य पेषणेन तेऽपि स्वयं कदाचित् पिष्टा भविष्यन्त्येवेति। ततः क्षुद्रस्वार्थसिद्ध्या विजयित्वाभिमान एतेषामविवेकित्वमेव व्यनक्ति। वस्तुतः स्वात्मवैरिण एवैते विवेकदृष्ट्या। ततः स्वार्थसिद्धिमात्रेणात्मनि विजयित्वाभिमान एतेषामविवेकमूलक एवेति भावः ॥ ४८ ॥

अथानेन विषयैषिणां नेतॄणां शासनं कथमपि न हितकरमिति निदर्श्यते —

**निमग्नैराशीर्षं नरकजलधेरन्तरुदरं**
**जनानां सङ्घातैरमृतमुपलभ्येत यदि नु।**
**ततो नृणां भोगप्रवणधिषणानां खलु भवे-**
**दमन्दानन्दानां जननममलं शासनमपि ॥ ४९ ॥**

आशीर्षम् = आपादमस्तकं, नरक एव जलधिः=समुद्रस्तस्यान्तरुदरं तदुदरमध्ये, निमग्नैः ब्रुडितैः, जनानां लोकानां, संघातैः=समूहैः यदि चेद्, अमृतं=सुधा, उपलभ्येत=उपलब्धुं = अवाप्तुं शक्या भवेदिति शक्यार्थे लिङ्, यदिन्वितिसम्भावनायां ततो भोगप्रवणाः = ऐन्द्रियविषयोपभोगं प्रति प्रह्वीभूताः तदनुगुणा वा तदेव विचिन्वन्ती धिषणा बुद्धिर्येषां तेषां, किञ्चामन्दः = सुविशालः खाद्यपेयश्रव्यस्पृश्यादिविषयजातकृत आनन्दो भुक्तिसुखं येषां तेषां, नृणां = नेतॄणां, जननं = उत्पत्तिः, शासनमपि, अमलं निर्मलं, दोषरहितं, राष्ट्राय प्रजाभ्यश्च हितं भवेद् इति सम्भाव्यते।

तथा नरकमग्नैरमृतं कथमपि नैव लभ्यमेवं भोगप्रवणैः कृतं शापनं कथमपि नैव जनेभ्यो हितमित्युपमात्र व्यङ्ग्या। उपमाकल्पनयार्थसंगत्यायमर्थो निदर्श्यत एवम् ॥ ४९ ॥

श्रीव्याकरणमहाभाष्यकारोपदेशानुसारं ग्रन्थं मङ्गलान्तं चिकीर्षुभिरनेन पञ्चाशत्तमेन पद्येन श्लेषेण भगवान् महेश्वरो भगवती जगदम्बा च समं स्तुयेते —

**स्वरूपे शेषे त्वं परमशिखिचित्रे भगवति**
**प्रकाशं स्वाकाशे विमृशसि सदानन्दसदने।**
**शिवे नित्ये सत्ये तव खलु मुहुः श्रीसति पदे**
**प्रणामाः शोभन्तां महति महतामीदृशि सदा ॥ ५० ॥**

हे परमेश्वरेत्यध्याहार्यम्, विशेषणद्वारेणैवात्र तस्यावगमः, स्वेष्टदेवतायाः साक्षात् नामग्रहणस्यानुचितत्वविचारेण। न्यूनपदत्वं च भक्तिरसनिमग्नताद्योतकत्वेन गुणोऽत्र। अथवा भक्तिमदविजृम्भया नामग्रहणस्यापि नानुचितत्वमिति तत्पक्षे परम इति पदस्यावृत्तियोजनेन हे परम ! परोऽनुत्तरः मः=शिवः परमशिवः, तत्-सम्बोधनमिदम्। हे परमशिव ! त्वं परमः=श्रेष्ठो यः शिखी=अग्निः विश्वविकल्पप्लोषक उदानरूपः शिवाग्निस्तेन चित्रे=विचित्रे आश्चर्यकारिणि स्वरूपे। व्यानरूपस्य परमशिवस्योदानरूपतायां याऽवरोहणशक्तिः सैव तस्येतरजडतुल्यशून्यादिवैलक्षण्य-प्रतिपादिकेति तत्कृतमेवाश्चर्यकारित्वं पारमेश्वरस्य स्वरूपस्य, अत एव च भगवति= भगो विश्वसृष्टिसंहारादिशक्तिरूपमैश्वर्यमस्यास्तीति भगवत् तस्मिन्नैश्वर्यमण्डिते, स्वरूपे, शुद्धप्रकाशविमर्शसमरसाकारे, स्पन्दाख्यसंविन्मात्रे, स्वे स्वभावभूते तत्त्वे त्वं शेषे= स्वपिषि, तत्रैव सदा विश्रान्तः सन् विजयसे। अथवा शेष इति न क्रियापदमपि-त्वग्रिमस्य स्वाकाश इति पदस्य विशेषणम्। तदा अशेष इत्यकारविश्लेषेण निखिले= परिपूर्णे; न शेषे इति वा, तदर्थः शेषः=अङ्गभावं प्राप्तो गुणीभूतस्तथाविधो न भवतीति सदा प्रधानत्वेनैव वर्तमाने, अथवा शेषे=गुणीभावं प्राप्ते स्वरूपे। शक्ति-रेव हि शिवस्य शिवत्वप्रयोजिका। शक्तिरहितत्वे च शिवस्य शिवत्वं नैव निर्वहेत्। इत्येवंभूतेन भक्तजनाकूतविशेषेण विमर्शाख्यशक्तिशेषीभूते प्रकाशरूपे स्वरूपे इत्यपि। तदेवंभूते सदानन्दसदने=सन् चासावानन्दश्च वास्तविकः परमानन्दः, अथवा सत् चानन्दश्च सच्चानन्दौ, सतां=सज्जनानां=साक्षात्कृतस्वरूपाणां सिद्ध-

जनानामानन्दः इति वा, किं वा सति=पारमार्थिकसत्ताविभूषितेसंविक्त्वे य आनन्दः स सदानन्दः तस्य, सदानन्दस्य,सत्तानन्दयोर्वा सदने=आश्रयभूते भित्तिभूते तद्व्रतयैव तयोर्भासमानत्वात् । एवंभूते स्वाकाशे=सु-आकाशे शब्दाकाशभूताकाशादुत्कृष्टे प्रकाशपरमार्थे संविन्मात्रे महाशून्यदेशीये चिदाकाशे, अथवा स्व आकाशे=स्वात्मरूपे-चिद्गगने, प्रकाशं=स्वात्मरूपं संवित्प्रकाशं विमृशसि, अहमिति पारिपूर्ण्येनान्तर्मुखतया च आत्माभिमुख्येन प्रत्यवमर्शनिर्भरं सम्पादयसि । प्रकाशस्य ह्यविनाभूतो विमर्शः, विमर्शस्य च तथैव प्रकाशः । परस्पराराहित्ये स्वरूपलोप एव स्यादेतयोः । आदेवा-देरासदाशिवं यस्य यस्य प्रणामाः विधीयन्ते ते सर्वे प्रणामाः परमेश्वरस्यैव वस्तुतः । पराशिवस्यैवाधोऽधो देवादिरूपेण कृतानामुपर्युपरि चेश्वरसदाशिवादिपदे कृतानां प्रणामानां क्रमशोऽपारमार्थिकस्य पारमार्थिकस्य च मोक्षस्य पर्यन्ते लाभः । इत्यत ऊर्ध्वदशासु शिवस्य प्रणामानां क्रमश उत्कृष्टोत्कृष्टफलप्रदत्वं सिद्धम् । तत एव सिद्धजना भगवत्सदाशिवादप्यूर्ध्वे शिवपदे वा ततोऽपि वोर्ध्वतने परमशिवपदे भगवन्तं परमेश्वरं प्रणमन्ति । तत एवं स्तूयते–हे परमेश्वर ! तव शिवे=परममङ्गला-त्मके, नित्ये = कालकृतसङ्कोचरहिते, सत्ये = पारमार्थिकसत्तासमलङ्कृते, श्रियो-पलक्षिते सति = यथार्थरूपे, महतामपि = श्रीमदीश्वरभट्टारकादीनामप्यपेक्षया महति =देशकृतसङ्कोचशून्ये, ईदृशि = एवंविधे विचित्रे पदेऽस्मादृशैर्जनैः सम्पादिताः तव सम्बन्धिनस्तुभ्यमर्पिताः, त्वां प्रति कृताः प्रणामाः मुहुः = वारंवारमतिशयेन सदा शोभन्तां = पारमार्थिकमोक्षलक्ष्म्या अलङ्कृताः सन्तोऽतिशयेन शोभायुक्ताः स्युरिति प्रार्थनायां लोट् । स्तुतं च **भगवतोत्पलदेवाचार्येण शिवस्तोत्रावलौ** —

> **तस्मिन् पदे भवन्तं सततमुपश्लोकयेयमत्युच्चैः ।**
> **हरिहर्यश्वविरिञ्चा अपि यत्र बहिः प्रतीक्षन्ते ॥ ( शि. स्तो. )**

**श्रीमद्विद्यापतिनापि च—**

> **कस्य नामकरणैरकृत्रिमैः पश्यतस्तव विभूतिमक्षताम् ।**
> **विभ्रमादवरतोऽपि जायते त्वां व्युदस्य वरद स्तुतिस्पृहा ॥**

एवं महेश्वरस्तुताविदं व्याख्यानम् । अथ जगदम्बास्तुतावेवम् –

हे श्रीसति ! =श्रीयुक्ते पारमार्थिकसत्तारूपे जगदम्ब ! इति सम्बोधनपदं, पदान्तराणि च सुबहूनि विशेषणान्यस्य तथाहि स्वरूपे स्वमेवं प्रकाशाविरहित

विमर्शाख्यं रूपं यस्याः सा स्वरूपा । जडपदार्थाश्च चेतनाप्रकाशेन प्रकाशाख्यरूपवन्तः प्रकाशन्ते । अन्यथा न सन्त्येव । चितिशक्तिः पुनः स्वेनैव रूपेण रूपवती । अथवा –सु +अरूपे=सुष्ठु,अरूपे चक्षुर्ग्राह्यस्थूलरूपरहिते, सततं ग्रहीत्रैकपरमार्थे । शेषे = प्रकाशशेषभूतविमर्शमयि । शिवशक्त्योर्हि शेष शेषिभावो भक्तजनाकूतवशादुभयथाऽपि स्तोत्रेषु सम्भवत्येव । तथा च स्तुतं श्रीमच्छङ्कराचार्यमहोदयैः श्रीसौन्दर्यलहर्याम्

**शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं**
**तवात्मानं मन्ये भगवति नवात्मानमनघम् ।**
**अतः शेषः शेषीत्ययमुभयसाधारणतया**
**स्थितः सम्बन्धो वां समरसपरानन्दपरयोः ॥** (सौ. ल. ३४)

अथवा शिवपक्ष इव अशेषे = न शेषे विमर्शरूपत्वात् प्रधानभूते,अशेषे = परिपूर्णे, देशकालाकारकृतसङ्कोचरहिते, परमः=श्रेष्ठोऽतिसुन्दरो यः शिखी मयूरस्तदाकारं तच्छिखाकारं चित्रं = विशेषकं यस्यास्तत्सम्बुद्धौ परमशिखिचित्रे, भगवति=विश्वसृष्ट्याद्यैश्वर्ययुक्ते, सदानन्दस्य सदानन्दयोर्वा व्याख्यातपूर्वयोः सदने = आश्रयभूते जगदम्ब ! त्वं शिवस्तुताविव, स्वाकाशे स्वं प्रकाशं सदा विमृशसि हे आनन्दसदने आनन्दजीवातुभूतविमर्शरूपे, विमर्श एव ह्यानन्दत्वं पारमेश्वरम् । एतत्पक्षे सदेति, आनन्दसदनेति च पृथक् पदद्वयं सदापदस्य च क्रियाविशेषणत्वम् । किञ्च हे श्रीसति भगवति हे शिवे = शिवरूपे नित्ये देशकृतसङ्कोचरहिते, सत्ये=यथार्थरूपे, मायामयात् कल्पितात्तत्त्वजातादतीते, पारमार्थिकसत्तामहिते, महति देशकृतसङ्कोचरहिते महतामपि महति, ईदृशि=एवंविधरूपे, किञ्च ईदृशि कामकलारूपे मातृकाचतुर्थार्णस्वरूपिणि, भगवति नित्ये; सत्ये ईदृशि=कामकलादृष्टौ, श्रीसति=सद्रूपे पदे मूलस्थानभूते शिवे शिवनाथे तव = त्वत्कृताः प्रणामाः खलु=निश्चयेन मुहुः शोभन्ताम्, त्वया शिवनाथं प्रति कृताः प्रणामाः सदैव शोभायुक्ता भवन्तु । अथवा तव पदे=शक्तिदशारूपे, शिवे=मङ्गलात्मके, नित्ये; सत्ये श्रीसति=सद्रूपे, ईदृशि= एवंभूतविशेषणविशिष्टे, कामकलारूपे वा, महति तवपदे महतां=ईश्वरभट्टारकादीनां तैः सम्पादिता इति यावत्, त्वां प्रति कृताः प्रणामाः मुहुः शोभन्ताम् । शिवे, नित्ये, सत्ये, श्रीसति, महति, ईदृशि इत्येतानि पदे इत्यस्य विशेष्यस्य विशेषणानि सप्तम्यन्तानि भगवत्याः जगदम्बायाश्च विशेषणत्वेन सम्बुद्धिरूपाणि, शिवे इत्यस्य विशेषणत्वे चाप्येतानि सप्तम्यन्तान्येव । पूर्वार्धे स्वरूपे शेषे इत्यादीनि पदानि शिवस्तुतौ

सप्तम्यन्तानि व्याख्यातानि देवीस्तुतौ च सम्बोधनत्वेनेति विशेषः । किञ्च शिवस्तुतौ यथा व्याख्यातं तेनैव प्रकारेण हे भगवति जगदम्ब त्वं स्वरूपभूते परमशिवाग्नि-विचित्रे शिवे शेषे तत्रैव विश्रान्ता स्वपिषि इत्येवमपि प्रथमपादस्यान्वयो जगदम्बा-सम्बन्धितया घटते । विमर्शरूपा हि शक्तिः प्रकाशरूपे शिवे एव विश्रान्ता आस्ते । अपि च स्वाकाशे चिद्गगनाकारे, सदानन्दविश्रान्त्याधारभूते च शिवे यः प्रकाश-स्तद्रूप एव, राहोः शिर इवात्र काल्पनिकं भेदमुररीकृत्य सप्तमीप्रयोगः,तं शिवप्रकाशं सदा विमृशसि=सदैव विमृशन्ती-वर्तसे । सदेत्यावृत्त्या योजनीयं, काकाक्षिवद्वोभयत्र योज्यम् । इत्येवमपि द्वितीयपादसङ्गतिर्घटते ॥ ५० ॥

अथैतेन सूक्तीनांसंग्रहकालनिर्देशपुरःसरं संग्रह उपसंह्रियते–

**अकिन्नरमितेऽब्दके वियति वैक्रमे माधवे**
**सुधांशुमतिदर्शके ग्रहपतेरजे संक्रमे ।**
**महाहृदयतोषिणीममृतवाग्भवोल्लासितां**
**पिबन्तु विबुधा इमाममृतसूक्तिपञ्चाशिकाम् ॥ ५१ ॥**

अकिन्नरमिते=जैमिनीयसूत्रनीत्या अ इति शून्यं कीति एकः न इति शून्यम्, र इति द्वौ, अङ्कानां वामदक्षिणपरिवृत्त्या सहस्रद्वयोत्तरे दशमे ( २०१० ) वैक्रमे= अब्दके संवत्सरे, माधवे=वैशाखमासे, सुधांशुः=चन्द्रस्तद्वति=सोमवारयुक्ते दर्शके= अमावस्यादिने, ग्रहपतेः=सूर्यस्य, वियति=आकाशे, अजे=मेषराशौ सङ्क्रमे=सौरेऽपि वैशाखमासे, एतदुपलक्षिते समये कविनोल्लासितामित्यग्रे सम्बन्धः, महतां हृदयं महा-हृदयं, महद्वाहृदयं महाहृदयं, तेषां महाहृदयानां कृते तोषिणीं=सन्तोषकारिणीम्, अतीवहृदयतोषिणीमिति वा, महती चासौ हृदयतोषिणी चेत्येतत्पक्षे विग्रहः, अमृता सततमविच्छेदेन सर्वप्रमातृहृदयगुहासूच्चार्यमाणा या वाक् चितिरितिसमाह्वया प्रकाशरूपिणी विमर्शप्राणा परस्पन्दात्मिका परा वाक्, तद्भवस्तामेव जननीत्वेन मन्यमानः, स्तनन्धयः शिशुरिव जननीं, तामेव परावाग्रूपिणीं परां शक्तिं सर्वथा समाश्रितो योऽमृतवाग्भवो नाम कविस्तेनोल्लासिताम्=उल्लासं पूर्णं विकासं प्रापितां इमाममृतसूक्तिपञ्चाशिकाम्=अमृतमय्यः सरसत्वेन याः सूक्तयो व्याख्यातरूपा-स्तासां पञ्चाशिकां = पञ्चाशत्संख्यसूक्तिसंग्रहात्मिकां अमृतसूक्तिपञ्चाशिकेति यथार्थ-

नाम्नीमिमां पुस्तिकां विबुधाः=देवाः=दैवीसम्पत्प्रधानाः सज्जनाः सहृदया विद्वांसः च पिबन्तु=अस्यारसमास्वादयन्त्विति निमन्त्रणे लोट् ।

बाणचंद्रवियन्नेत्रे वैक्रमे शुभवत्सरे
एकादश्यां तिथौ पौषेऽसितेपक्षेविधोर्दिने ।
बलजिन्नाथविदुषा देवभाषामयी शुभा
सूक्तिपञ्चाशिकाटीकासम्यगेषा समापिता ॥

इति महामाहिम - आचार्य - श्रीमदमृतवाग्भवप्रणीता

* श्रीमदमृतसूक्तिपञ्चाशिका *

काश्मीरक - पण्डित - श्रीबलजिन्नाथविरचितया पदार्थदीपिन्या संस्कृतटीकया युता । समाप्ता ।



महामहिम श्रीमदमृतवाग्भवाचार्यप्रणीत –

# श्रीआत्मविलासः

मनुष्यमात्रके लिए परम कल्याणकारी व सन्मार्गप्रदर्शक यह बड़ी अद्भुत आध्यात्मिक दार्शनिक ग्रन्थरत्न है, जिसके प्रकाशित होते ही दार्शनिक जगत्में हलचल सी मच गई, और सैकडों प्रतियां हाथों-हाथ लग गई। इस ग्रन्थको पढनेसे स्थितप्रज्ञता प्राप्त होती है, चित्त शान्त होता है। अतः यदि आप भी आत्मा क्या है? परमात्मा क्या है? ईश्वर जगदुत्पात्ति क्यों और किस प्रकार करता है? हम क्या हैं और हमें क्या करना चाहिये? दर्शन किसे कहते हैं? उनका प्रारम्भ तथा अन्त कहां कहां होता है? उनकी उपपात्ति क्या है? आदि–आदि आध्यात्मिक गूढ रहस्योंसे भलीभांति परिचित हो कर आत्म-साक्षात्कार करना चाहते हैं तो इस ग्रन्थका अवश्य मनन कीजिये, आपके सभी सन्देह दूर हो कर अद्भुत आनन्द प्राप्त होगा। इसपर विस्तृत संस्कृत व्याख्याभी हो गई है। हिंदी व्याख्यासहित दूसरा संस्करण शीघ्रही प्रकाशित होनेवाला है।

# श्रीराष्ट्रसञ्जीवन

## "श्रीराष्ट्रालोक" का भाष्य

यह ग्रन्थ विश्वसाहित्यमें एक अद्भुत है। सैंतीस वर्ष पहले इसका निर्माण हुआ था, यह संस्कृतमें है। इस अद्वितीय ग्रन्थको राष्ट्रभाषानुवादके साथ प्रकाशित करनेका आयोजन हो रहा है। इस संपूर्ण विशाल ग्रन्थ के प्रकाशनमें लगभग १५०००, पन्द्रह सहस्र रुपये व्यय होंगे। यह संपूर्ण व्यय एक ही महानुभावका होगा, वे महानुभाव ब्राह्मण अथवा क्षत्रिय वर्णके हों साथ ही सच्चरित्र एवं आर्यप्रकृतिका होना आवश्यक है। उनका सचित्र परिचय भी इस ग्रन्थके प्रारम्भमें रहेगा। ग्रन्थकार के साथ ही इस ग्रन्थके प्रकाशकका नाम भी विश्वमें अमर रहेगा। उक्त नियमानुसार जो सज्जन इस ग्रन्थ प्रकाशन द्वारा राष्ट्र एवं साहित्य सेवाके साथ अपना जीवन सार्थक बनाना चाहते हों वे निम्न पते पर पत्र-व्यवहार करें।

शीघ्रही प्रकाशित करनेका प्रबंध हो रहा है।

**श्री. बलजिन्नाथ पण्डित**

शास्त्री एम्. ए. पीएच् डी., ( श्रीपीठ ) प्रो. संस्कृत विभाग
हिमाचल युनिव्हर्सिटी, सिमला, हिमाचल प्रदेश.

श्री :

## श्रीमदमृतग्रन्थमालाके ६ पुष्प–

१–**श्रीमहाऽनुभवशक्तिस्तवः**–संस्कृत तथा हिन्दी व्याख्यासहित मू० ५० पै०

२–**श्रीपरशुरामस्तोत्रम्**–राष्ट्रभाषापद्यगद्यानुवादसहित सचित्र चतुर्थ संस्करण अमूल्य

३–**श्रीश्रीविंशतिकाशास्त्रम्**–दो संस्कृत व्याख्याओं तथा एक हिंदी व्याख्याके साथ। मू० ४ रु० ७५ पै०

४–**श्रीसप्तपदीहृदयम्**–संस्कृत, हिंदी, इंगलिश रूपान्तरोंके साथ मू० १ रु०

५–**श्रीसञ्जीवनीदर्शनम्**–हिंदी भाषान्तरसहित मू० १ रु०

६–**श्रीसंक्रान्तिपञ्चदशी**–राष्ट्रभाषागद्यपद्यानुवादसहित मू० १ रु०

## श्रीमदानन्दवनप्रसूनमालाके दो पुष्प–

१–**श्रीसिद्धमहारहस्यम्** – संस्कृत मूल्य १ रु.

२–**श्रीमदमृतसूक्तिपञ्चाशिका**–संस्कृत व्याख्यासहित मूल्य १/२ रु.

## अन्य ग्रन्थ

१–**श्रीराष्ट्रालोकः**–राष्ट्रभाषानुवादसहित तृतीय संस्करण मूल्य १ रु०

२–**श्रीआत्मविलासः** –श्रीसुन्दरीराष्ट्रभाषाभाष्यसहित अप्राप्य मूल्य-२५/-

३–**श्रीस्वाध्यायमहिमस्तोत्रम्**–हिंदी भाषान्तरके साथ। मुद्रणालयमें।